अथवा विद्याभेदे प्रपदने–अप्रतिष्ठितचेतसः- चञ्चलचित्तस्य प्रज्ञादायम्–अमोघत्वानन्यापेक्षत्वशरण्याभिमतत्वक्षणमात्रनिष्पाद्यत्वादि-ज्ञानम् इह इदानीं मे दिशन्तु ददन्तु । प्रार्थनायां लोट् ।। १ ।।

इदानीं स्वस्य तेषु विश्वासं प्रार्थयते–

**एते मह्यमपोढमन्मथशरोन्माथाय नाथादयः**
**त्रय्यन्तप्रतिनन्दनीयविविधोदन्ताः स्वदन्तामिह ।**
**श्रद्धातव्यशरण्यदम्पतिदयादिव्यापगाव्यापकाः**
**स्पर्धाविप्लव-विप्रलम्भपदवीवैदेशिका देशिकाः ।। २ ।।**

त्रय्यन्तप्रतिनन्दनीयविविधोदन्ताः श्रद्धातवव्यशरण्यदम्पतिदयादिव्यापगाव्यापकाः स्पर्धाविप्लवविप्रलम्भपदवीवैदेशिका देशिका अपोढमन्मथशरोन्माथाय मह्यमिह स्वदन्तामित्यन्वयः ।।

एते मह्यमिति । एते–अविच्छन्नसम्प्रदाया नाथादयो देशिकाः । त्रय्यन्तैः वेदान्तैः प्रतिनन्दनीयाः स्तोतव्या विविधाः स्वरूपोपाय पुरुषार्थप्रतिपादकतया नानाविधा उदन्ता उपदेशवाक्यानि येषां ते तथोक्ताः । श्रद्धातव्ययोर्वात्सल्य-सौशील्यादिविशिष्टतया विश्वसनीययोः शरण्ययोः । प्रपत्तव्ययोः दम्पत्योः । अनेन विशिष्टस्यैवोपायत्वमिति सूचितम् । तयोर्दया सैव दिव्यापगामन्दाकिनी तस्यां व्यापकाः तत्पात्रभूता इत्यर्थः । स्पर्धया परस्परजिगीषया विप्लव उपद्रवो यस्यां सा च विप्रलम्भानां कुमतीनां पदवी च तस्यां वैदेशिका विमुखाः त्रय्यन्तेत्यादि-विशेषणत्रयेण यथाक्रमं ज्ञानभक्तिवैराग्याणि सूचितानि । देशिका नाथादयोऽस्मद्-गुरुपर्य्यन्ता इत्यर्थः । अपोढः तिरस्कृतो मन्मथशरैरुन्माथः पराभवो येन तस्मै । अनेनाचार्यकृपाहेतुभूतं 'विष्णोः कटाक्ष अद्वेष' इत्यादि प्रमाणप्रतिपादितमद्वेषादिकं सूचितम् । यद्वा अपोढमन्मथशरोन्माथाय निरस्तकामशरविकारायेत्यर्थः । इह वात्सल्यैकविषयाय मह्यं स्वदन्ताम्–रोचन्ताम् । तेषु मम विश्वासो भवत्वित्यर्थः ।। २ ।।

अनन्तरं तेषामुत्कर्षमाशास्ते–

**हृद्या हृत्पद्मसिंहासनरसिक हयग्रीवहेषोर्मिघोष-**
**क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।**

**दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्तत्-**
**सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ।। ३ ।।**

हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोषक्षिप्तप्रत्यर्थिदृप्तिः दिक्सौ-धाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्तत्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका बहुगुणा अस्मदगुरूणां पङ्क्तिर्जयतीत्यन्वयः ।।

हृद्येति । हृद्या–ज्ञानानुष्ठानपूर्णतया सर्वमनोहरा । हृदेव पद्मं तदेव सिंहासनमितिरूपितरूपकं तस्मिन् रसिकस्य आसक्तस्य हयग्रीवस्य हेषोर्मिघोषः तरङ्गध्वनिः तेन क्षिप्ता निराकृता प्रत्यर्थिनां प्रतिवादिनां दृप्तिः मदो यया सा तथोक्ता । देशविप्रकृष्टानामपि दिग्विजयमुखेन निरास इत्याह – दिक्सौधेति । दिश एव सौधा हर्म्याणि तेष्वाबद्धानां स्थापितानां जैत्राणां जयसूचकानां ध्वजानां पटवसनस्य पटसम्बन्धिवायोः स्फात्या वेगेन निर्धूतानि तत्तत्सिद्धान्तानां स्तोमाः समूहाः त एव तूलस्तबकानि कार्प्पासराशयः तेषां विगमनेन विनाशनेन व्यक्ता विशदा सद्वर्तनीका सन्मार्गो यस्याः सा तथोक्ता । बहुगुणा–एवमुक्तसमस्त-कल्याणगुणा । अस्मद्गुरूणां पङ्क्तिः–अस्मदाचार्याणां प्राचार्याणां परम्परा जयति सर्वोत्कर्षेण वर्तते ।। ३ ।।

**( अथोपोद्घाताधिकारः )**

अथ क्रियमाणस्य ग्रन्थस्य मोक्ष एव परमप्रयोजनमिति परान् प्रत्युपदिशति—

**पठत रहस्यत्रयसारादुद्धृतमधिकारसङ्ग्रहं सुधियः ।**
**जननपदवीगतागतजङ्घालत्वं जिहासन्तः ।। ४ ।।**

जननपदवीगतागतजङ्घालत्वं जिहासन्तः सुधियो रहस्यत्रयसारादुद्धृतम-धिकारसंग्रहं पठतेत्यन्वयः ।।

पठतेति । हे सुधियः - सारासारविवेकज्ञाः ! जननपदव्यां संसारमार्गे गतागतेषु यातायातेषु जङ्घालत्वं दीर्घपादत्वं वेगमिति यावत् । जिहासन्तः– हातुमिच्छन्तः यदि । रहस्यत्रयसाराख्यग्रन्थात्सारतमत्वेन पृथक् कृतम् । अधिकाराः संगृह्यन्तेऽस्मिन्नित्यधिकारसंग्रहसारग्रन्थं पठत जपत । पठतेत्यनेन जपोच्चारण-मात्रमेवालं नार्थज्ञाने निर्बन्ध इति व्यज्यते ।। ४ ।।

अथ नित्यसूरितुल्यस्य चेतनस्यैतादृशपुरुषार्थानुपलब्धौ हेतु दर्शयन्नुत्तरत्र तत्पुरुषार्थलब्धये गुरुपरम्पराप्राप्तं मन्त्राख्यद्रव्यमेव साधनमिति वक्तुकामस्तत्साधनश्च भगवज्जायमानकटाक्षादिकमित्याह—

**मणिवर इव शौरेर्नित्यहृद्योऽपि जीवः**
**कलुषमतिरविन्दन् किङ्करत्वाधिराज्यम् ।**
**विधिपरिणतिभेदाद्वीक्षितस्तेन काले**
**गुरुपरिषदुपज्ञं प्राप्य गोपायति स्वम् ।। ५ ।।**

शौरेः मणिवर इव नित्यहृद्योऽपि कलुषमतिः किङ्करत्वाधिराज्यम् अविन्दन् । जीवो विधिपरिणतिभेदात् तेन काले वीक्षितस्सन् गुरुपरिषदुपज्ञं स्वं प्राप्य गोपायतीत्यन्वयः ।।

मणीति । जीवः— चेतनः । शौरेः - पुरुषोत्तमस्य मणिवर इव कौस्तुभ इव नित्यं हृद्योऽपि नित्यं मनोहरोऽपि । अनेन जीवस्य संसारानर्हत्वं कौस्तुभाभिमानिनीदेवतात्वञ्च सूचितम् । कलुषमतिः— अनादिकर्मवासनया संकुचितज्ञानः किङ्करत्वं कैङ्कर्य्यं तदेवाधिराज्यं सार्वभौमत्वम् । अविन्दन् अलभमानः । विधिपरिणतिभेदात्— भाग्यपरिपाकविशेषात्, तेन भगवता, काले—जननकाले । वीक्षितः गुरुपरिषद्भ्य उपज्ञातं स्वेन गृहीतं स्वं मन्त्राख्यं द्रव्यं प्राप्य गोपायति 'मन्त्रं यत्नेन गोपयेत्' इति स्मरणात् ।। ५ ।।

अथ पूर्वोक्तविधिपरिपाकस्य सर्वसिद्धान्तसिद्धत्वप्रदर्शनेन प्रपन्नस्य प्रपत्त्युत्तरकालगुणानुभवकैङ्कर्य्यादिरूपवृत्तेर्मुक्तवद्भोग्यतां प्रतिपादयन् तादृशाधिकारिणो दुर्लभत्वमाह—

**कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे**
**तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा ।**
**तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचित्**
**मुक्तैश्वर्य्यान्तसम्पन्निधिरपि भविता कश्चिदित्थं विपश्चित् ।। ६ ।।**

हि यस्मात्कारणादिह लोके प्रतिपुरुषमनादिचित्रप्रवाहे कर्माविद्यादिचक्रे तत्तत्काले

विविधा विपक्तिः सर्वसिद्धान्तसिद्धा भवति, तत्तस्मात् कारणात् कश्चिद्विपश्चित् तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणस्सन्नित्य मुक्तैश्वर्य्यान्त-सम्पन्निधिरपि भवितेत्यन्वयः ।।

कर्मादीति । पुरुषं पुरुषं प्रतीतिप्रतिपुरुषम् तत्तत्पुरुषभेदेन कर्माविद्यादीनां चक्रे समूहे । आदिशब्देन संसार उच्यते, अविद्याशब्देन 'अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः । अविद्यातरुसंभूतेर्बीजमेतद्द्विधा स्थितम्' इत्युक्ताविद्योच्यते । अनादिः–तेषां कर्मादित्रयाणां घटीयन्त्रन्यायेन पुनः पुनरुत्पत्त्याऽनादित्वम् चित्रः पुरुषभेदान्नानाविधः प्रवाहो यस्य तस्मिंस्तथोक्ते सति तत्तत्काले– अनुभवोन्मुखकाले विविधा कर्मभेदान्नानाविधा । सर्वेषु सिद्धान्तेषु सिद्धा सम्प्रतिपन्ना विपक्तिः परिपाको भवति हि भवत्येव । तेन सुकृतपरिपाकेन लब्धः प्राप्तः स्वावकाशो यया सा च तथाविधया प्रथमस्य गुरोर्भगवतः कृपया गृह्यमाणो विषयीक्रियमाणो विपश्चित् । मुक्तैश्वर्यमन्ते यस्यास्सा च संपच्च गुणानुभवकैङ्कर्य्यरूपा वृत्तिः तस्या निधिरपि निक्षेपस्थानमपि भविता । प्रथमं सुकृतपरिपाकः पश्चात् प्रपत्तावन्वयः । अनन्तरं गुणानुभवरूपवृत्तिः ततो मुक्तैश्वर्यमिति क्रमो दृष्टव्यः ।। ६ ।।

**(अथ सारनिष्कर्षाधिकारः)**

उपायापायसम्बन्धरहितस्वरूपानुरूपप्रपत्तिप्रकाशक मूलमन्त्र एव पूर्वैरनुसंहित इत्याह—

**श्रुतिपथविपरीतं क्ष्वेलकल्पं श्रुतौ च**
**प्रकृतिपुरुषभोगप्रापकांशो न पथ्यः ।**
**तदिह विबुधगुप्तं मृत्युभीता विचिन्वन्त्-**
**युपनिषदमृताब्धेरुत्तमं सारमार्य्याः ।। ७ ।।**

यतः श्रुतिपथविपरीतं क्ष्वेलकल्पं श्रुतौ प्रकृतिपुरुषभोगप्रापकांशो न पथ्यः तत्तस्मात् कारणात् मृत्युभीता आर्या इह विबुधगुप्तमुपनिषदमृताब्धेरुत्तमं सारं विचिन्वन्तीत्य-न्वयः ।।

श्रुतीति । श्रुतिपथविपरीतम् 'न हिंस्यात्सर्वाभूतानि' 'न कलञ्जं भक्षयेत्' 'नानृतं वदेत्' इत्यादिवेदमार्गविरुद्धं हिंसादिरूपं कर्म क्ष्वेलकल्पं विषतुल्यमिति यावत् ।

श्रुतौ च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिविधायकश्रुतौ सत्यामपि प्रकृति पुरुषयोर्देहात्मनोर्योगस्य पुनः सबन्धस्य प्रापकांशो ज्योतिष्टोमादिरूपसाधनविशेषः पथ्यो न, पुनः संसारापादकत्वात् । मृत्युभीताः प्रकृतिसम्बन्धभीताः । आर्या आचार्य्या आत्मानात्मज्ञाः । इह संसारदशायां विबुधैः ज्ञानिभिः गुप्तं सुरक्षितम् । उपनिषदमृताब्धेः– वेदान्तदुग्धसमुद्रस्य । उत्तमं श्रेष्ठम् । प्रधानमिति यावत् उद्धृतमिति वा पाठः उद्धृतं प्रथितं सारं मन्त्राख्यं विचिन्वन्ति प्रार्थयन्ते ।। ७ ।।

अथ रहस्यत्रयार्थज्ञानवतो हसन्तिकापङ्कजन्यायेन दुर्लभतां वदन् सपरिजनस्य सर्वातिशायित्वमाह–

**शाखानामुपरिस्थितेन मनुना मूलेन लब्धात्मकः**
**सत्ताहेतुसकृज्जपेन सकलं कालं द्वयेन क्षिपन् ।**
**वेदोत्तंसविहारसारथिदयागुम्फेन विश्रम्भितः**
**सारज्ञो यदि कश्चिदस्ति भुवने नाथः सयूथस्स नः ।। ८ ।।**

शाखानामुपरिस्थितेन मूलेन मनुना लब्धात्मकः सत्ताहेतुसकृज्जपेन द्वयेन सकलं कालं क्षिपन् वेदोत्तंसविहारसारथिदयागुम्फेन विश्रम्भितोऽत एव सारज्ञो भुवने यद्यस्ति स नः सयूथः नाथ इत्यन्वयः ।।

शाखानामिति । शाखानां वेदानामुपरि– अग्रभागे । उपनिषदित्यर्थः । स्थितेन मूलेन मनुना मूलमन्त्रेण लब्धो ज्ञात आत्मा स्वरूपं येन स तथोक्तः । सत्ताहेतुसकृज्जपेन सत्तायाः पुरुषार्थसिद्धेः हेतुः सकृज्जपो यस्य तेन द्वयेन मन्त्ररत्नेन 'सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम्' इत्युक्त्या सकृज्जपः पुरुषार्थ हेतुः । जपान्तरं तु कालक्षेपार्थमिति भावः । सकलं कालं मोक्षपर्यन्त कालं द्वयेन क्षिपन् वेदानामुत्तंसाः कर्ण भूषणानि । वेदान्ता इति यावत् । तेषु विहारो यस्य स चासौ सारथिः कृष्णः तस्य दयायाः गुम्फः परिपाकश्चरमश्लोकः तेन विश्रम्भितः सञ्जातविश्वासः । नैर्भर्य्यकाष्टायुक्त इति यावत् । मूलमन्त्रेण स्वरूपं ज्ञात्वा द्वयेन सत्तां सम्पाद्य तेनैव कालक्षेपं कुर्वन् चरमश्लोकेन विश्वासयुक्तः सारज्ञः कश्चिद् भुवनेऽस्ति । सयूथः सपरिजनः स एव नो नाथः–अस्माकं स्वामीति । यूथस्येति पाठे तु नोऽस्माकं यूथस्य स नाथ इत्यर्थः ।। ८ ।।

(अथ प्रतितन्त्रसारोद्धाराधिकारः)

अथ मूलमन्त्रार्थपरिज्ञानेनैव वेदान्ततात्पर्य्यमपि निश्चेतुं शक्यत इत्याह—

**आधेयत्वप्रभृतिनियमैरादिकर्त्तुश्शरीरं**
**सत्तास्थेमप्रपतनफलेष्वेतदायत्तमेतत् ।**
**विश्वं पश्यन्निति भगवति व्यापकादर्शदृष्टि-**
**र्गम्भीराणामकृतकगिरां गाहते चित्तवृत्तिम् ।। ९ ।।**

सत्तास्थेमप्रपतनफलेषु एतदायत्तमेतद्विश्वम् आधेयत्वप्रभृतिनियमैः आदि- कर्त्तुश्शरीरम् इति मूलमन्त्रेण पश्यन् व्यापकादर्शदृष्टिर्गम्भीराणामकृतकगिरां चित्तवृत्तिं भगवति गाहतेत्यन्वयः ।।

आधेयेति । व्यापको मूलमन्त्रः । तस्य व्यापकवस्तुप्रतिपादकत्वादध्याहारं विनाऽर्थप्रतिपादकत्वम् । स एवादर्शो दर्पणं तस्मिन् दृष्टिर्यस्य स तादृशः । पुरुषः । विश्वम्- चेतनाचेतनात्मकञ्जगत् । आधेयत्वं धार्यत्वं प्रभृतिर्येषां ते ते च नियमा धर्माः प्रभृतिशब्देन शेषत्वनियाम्यत्वयोर्ग्रहणम् । यन्नियाम्यं यद्धार्य्यं यच्छेषभूतं तत्तस्य शरीरमिति लक्षणात् । एतैर्नियमैः – आदिकर्त्तुर्भगवतः शरीरमिति पश्यन् जानन् गम्भीराणां दुर्बोधानाम् । अकृतकगिराम्–अपौरुषेयवाचां वेदान्तानां चित्तवृत्तिं तात्पर्य्यं भगवति गाहतेऽनायासेन जानाति ।। ९ ।।

पूर्वश्लोकोक्तशरीरशरीरिभावसम्बन्धस्य भाष्यादिभिः परवादिनिरसनमुखेन सुनिश्चितत्वात् , भाष्यकारेषूपकारमनुसन्धत्ते –

**यद्येतं यतिसार्वभौमकथितं विद्यादविद्यातमः-**
**प्रत्यूषं प्रतितन्त्रमन्तिमयुगे कश्चिद्विपश्चित्तमः ।**
**तत्रैकत्रझटित्युपैति विलयं तत्तन्मतस्थापना**
**हेवाकप्रथमानहेतुककथाकल्लोलकोलाहलः ।। १० ।।**

एवं यतिसार्वमौमकथितमविद्यातमःप्रत्यूषं प्रतितन्त्रं विपश्चित्तमोऽन्तिमयुगे कश्चिद्विद्याद् यदि तत्रैकत्र तत्तन्मतस्थापनाहेवाकप्रथमानहैतुककथाकल्लोलकोलाहलो विलयं झटित्युपैतीत्यन्वयः ।

यदीति । यतिसार्वभौमेन भगवद्भाष्यकारेण कथितम् । अविद्याऽनात्मन्यात्मबुद्धिरूपा सैव तमः तस्य प्रत्यूषं निवर्तकमितिभावः । एवं सकलप्रमाणा-नुगृहीतं प्रतितन्त्रं प्रसिद्धतन्त्रं सिद्धान्तम् अन्तिमयुगे कलियुगे कश्चिद्विपश्चित्तमो ज्ञानाधिकतम विद्याद्यदि- जानीयाद्यदि तत्रैकत्र एकस्मिन् ज्ञानिनि तेषां मतानां स्थापना निर्वाहः तस्मिन् हेवाकेन उत्सुकेन प्रथमानां प्रवृद्धानां हैतुकानां हेतुवादिनां कथा वादाः त एव कल्लोलाः तेषां कोलाहलो घोषविशेषः झटिति शीघ्रमेव विलयं विनाशम् उपैति प्राप्नोतीति ।। १० ।।

### (अथार्थपञ्चकाधिकारस्सङ्गृह्यते)

अनेनैव मूलमन्त्रेण ‘ प्राप्यस्य ब्रह्मणो रूपम् ’ इत्यादिप्रमाणप्रतिपादितमर्थपञ्चकं प्रतिपाद्यत इत्याह—

**आदौ प्राप्यं परममनघं प्राप्तृरूपं चमादा-**
**विष्टोपायं त्वयननमसोरीप्सितार्थश्चतुर्थ्याम् ।**
**तद्व्याघातं मम कृतिगिरि व्यञ्जयन्तं मनुं तं**
**तत्प्रायं च द्वयमपि विदन्सम्मतः सर्ववेदी ।। ११ ।।**

परममनघं प्राप्यमादौ व्यञ्जयन्तं प्राप्तुः रूपं च मादौ व्यञ्जयन्तम् इष्टोपायं त्वयननमसोर्व्यञ्जयन्तम् ईप्सितार्थं चतुर्थ्यां व्यञ्जयन्तम् तद्व्याघातं मम कृतिगिरि व्यञ्जयन्तं तं मनुं तत्प्रायं च द्वयमपि विदन् सर्ववेदी सम्मतः ।।

आदाविति । अकार आदिर्यस्य तस्मिन् । आदिशब्देन नारायणपदमुच्यते । प्रणवस्थेऽकारे नारायणपदे च अनघं निखिलहेयप्रत्यनीकं परमं सकलकल्याण-गुणैकतानं प्राप्यं ब्रह्मस्वरूपं व्यञ्जयन्तमित्यनेन सम्बन्धः । मकार आदिर्यस्य तस्मिन्मादौ । आदिशब्देन नारपदं चतुर्थी च प्रतिपादिते । मकारे नारपदे चतुर्थ्यां च प्राप्तुः जीवस्य स्वरूपमस्यापि व्यञ्जयन्तमित्यनेन सम्बन्धः । अयननमसोः– अयनपदे नमः पदे चेष्टस्य पुरुषार्थस्योपायं व्यञ्जयन्तं नारमयन इति व्युत्पत्याऽयनशब्दस्योपायवाचकत्वम् ‘गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभा’ इत्युपदेशानन्तरं ‘ द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम् ’ इत्यनुष्ठानश्लोके शरणशब्दस्थाने नमश्शब्दप्रयोगान्नमश्शब्दस्यापि स्थानप्रमाणन्यायेनोपायवाचकत्वं सिद्धम् । चतुर्थ्यां

व्यक्तचतुर्थ्यामीप्सितमर्थं प्राप्तिफलं कैङ्कर्य्यमिति यावत् । मम कृतिगिरि नमःपदस्थे मकारेऽहङ्कारममकारात्मकं तद्व्याघातं तस्य कैङ्कर्य्यस्य व्याघातं विरोधिनं च व्यञ्जयन्तं प्रतिपादयतं तं सकलवेदान्तसारभूतं मनुं मूलमन्त्रं तत्प्रायं तेन मनुना तुल्यमर्थपञ्चकप्रतिपादकत्वेन मन्त्रेण समानमिति यावत् । द्वयमपि विदन्–पुरुषस्सर्ववेदी सर्वज्ञ इति सम्मतः सर्वसम्पन्नो भवति । अर्थपञ्चकस्यैव सकलशास्त्रप्रतिपाद्यत्वेन तत्तज्ज्ञानवान् सर्वज्ञो भवतीति भावः ।। ११ ।।

पूर्वश्लोकोक्तमर्थपञ्चकं स्वानुष्ठानमुखेन विशिष्य निरूपयति—

**प्राप्यं ब्रह्म समस्तशेषिपरमं प्राप्ताऽहमस्योचितः**
**प्राप्तिर्दायधनक्रमादिह मम प्राप्ता स्वतः सूरिवत् ।**
**हन्तैनामतिवृत्तवानहमहंमत्त्या विमत्त्याश्रयः**
**सेतुस्सम्प्रति शेषिदम्पदिभरन्यासस्तु मे शिष्यते ।। १२ ।।**

समस्तशेषि ब्रह्म परमप्राप्यम् अहम् अस्योचितः प्राप्ता इह मम प्राप्तिः सूरिदायधनक्रमात् स्वतः प्राप्ता, एवंभूतोऽहम् अहंमत्त्या विमत्याश्रयभूतस्सन्नेनां प्राप्तिमतिवृत्तवान् हन्तैवंभूतस्य मे शेषिदम्पदि सेतुर्भरन्यासस्तु शिष्यत इत्यन्वयः ।।

प्राप्यमिति । समस्तस्य चेतनाचेतनात्मकस्य जगतः शेषी स्वामी तत्र हेतुमाहपरममिति । निखिलहेयप्रत्यनीककल्याणैकतानतया सर्वोत्तरमित्यर्थः । ब्रह्म प्राप्यम् । न स्वर्गादयः तेषां हेयप्रत्यनीकताद्यभावेन प्राप्याभासरूपत्वात् । अहं शेषभूतोऽस्य परब्रह्मण उचितः निरुपाधिकः प्राप्ता तदनुभवजनितप्राप्ति-कारितकैङ्कर्य्यरूपफलभाक् । मम प्राप्तुः प्राप्तिफलं कैङ्कर्य्यमिति यावत् । दायधनक्रमात् ज्ञातित्वप्राप्तधनन्यायेन सूरिवत् स्वत उपाधिं विना प्राप्ता । अहं देहात्माभिमानरूपाया विमतेः विपरीतज्ञानस्याऽऽश्रयस्सन् , अहम्मत्त्या स्वरक्षणे स्वप्रवृत्तिमहङ्काररूपया बुद्ध्या, एनां प्राप्तिम् अतिवृत्तवान् – अतिक्रान्तोऽस्मि हन्तेति खेदे । संसारदशायां मे मम शेषभूतस्य शेषिदम्पदि कैङ्कर्य्यरूपसाम्राज्यविषये भरन्यासः प्रपत्तिः सेतुः संसारोत्तरणसाधनं शिष्यते । भक्तावधिकाराभावात् प्रपत्तिरेव परिशिष्यत इति भावः । परमपुरुषः प्राप्यः, संसारी चेतनः प्राप्ता, भगवत्कैङ्कर्यं प्राप्तिफलम् तद्विरोधिना-वहङ्कारममकारौ, उपायस्तु प्रपत्तिरित्यर्थ-पञ्चकनिष्कर्षः ।। १२ ।।

(अथ तत्त्वत्रयाधिकारस्सङ्गृह्यते)

मुमुक्षूणां ज्ञातव्यं तत्त्वत्रयमपि पूर्वाचार्यैः सुनिश्चित्योपदिष्टमित्याह —

**प्रकृत्यात्मभ्रान्तिर्गलति चिदचिल्लक्षणधिया**
**तथा जीवेशैक्यप्रभृतिकलहस्तद्विभजनात् ।**
**अतो भोग्यं भोक्ता तदुभयनियन्तेति निगमै-**
**र्विभक्तं नस्तत्त्वत्रयमुपदिशन्त्यक्षतधियः ।। १३ ।।**

प्रकृत्यात्मभ्रान्तिश्चिदचिल्लक्षणधिया गलति जीवेशैक्यप्रभृतिकलहश्च, तद्विभजनात् चाथ अतोऽक्षतधियो भोक्ता भोग्यं तदुभयनियन्तेतिनिगमैर्विभक्तं तत्त्वत्रयं न उपदिशन्त्वित्यन्वयः ।।

प्रकृत्येति । चिल्लक्षणानि स्वयंप्रकाशत्वनित्यत्वादीनि अचिल्लक्षणानि जडत्वपरिणामत्वादीनि तेषां धिया विवेकेन प्रकृतौ देहे आत्मेति भ्रान्तिः देहात्मभ्रमो गलति नश्यति तथा तद्वत् जीवेशैक्यं जीवब्रह्मैक्यं प्रभृतिर्यस्य स चासौ कलहश्च । प्रभृतिशब्देन परिणामवादादिकं सूच्यते; तयोर्विभजनात्– असाधारण-धर्मवत्तया निरूपणाज्जीवासाधारणधर्मा नियाम्यत्वशेषत्वादयः, ईशासाधारणधर्मास्तु नियन्तृत्वशेषित्वादयः, तेषां विभजनेन बाह्यान्तरकलहो गलतीत्यर्थः । अतो विपरीतज्ञानस्य निरस्तत्वात् । भोक्ता जीवः, भोग्यं प्रकृतिः तयोरुभयोः प्रकृतिपुरुषयोरुभयोर्नियन्ता ईश्वर इत्यनेन प्रकारेण निगमैश्शास्त्रैर्विभक्तं पृथक्कृत्य निरूपितम् । तत्त्वानां चिदचिदीश्वराणां त्रयम् । अक्षतधियः सम्यज्ज्ञाना नाथादयो जिज्ञासूनस्मानुपदिशन्तु ।। १३ ।।

अथ षट्तत्वषोडषतत्ववादादिकं तत्वत्रयज्ञानवतो निराकर्त्तुं शक्यत इत्याह—

**आवापोद्वापतः स्युः कति कति कविधीचित्रवत्तत्तदर्थेषु**
**आनन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः ।**
**तत्त्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान् समस्तान्**

**पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुताधीः ।। १४ ।।**

तत्तदर्थेष्वस्तिनास्त्योरानन्त्यादावापोद्वापतोऽनवधिकुहनायुक्तिकान्ताः कति कति कृतान्तास्स्युः तथापि निस्समस्तत्वालोकस्तान् समस्तान् सहसा लोप्तुं प्रभवति । तथाहि पुंस्त्वे तत्वेन दृष्टे स्थाणुताधीः पुनर्न प्राणिता खल्वित्यन्वयः ।।

आवेति । तत्तदर्थेषु तेषु तेष्वर्थेषु विषये । आवापोद्वापतः–आकर्षण-विकर्षणाभ्यां जायमानयोरस्तिनास्त्योः । आनन्त्यात् - बहुत्वात् कविधीवत् चित्रकर्मवच्च निरवधीनां कुहनायुक्तीनां कुतर्काणां कान्ताः मनोहराः कृतान्ताः सिद्धान्ताः कति कति समर्थिताःस्युः । अनेकधा भवेयुरिति यावत् । निस्समः निष्प्रतिद्वन्द्वः तत्वालोकः तान् समस्तान् सिद्धान्तान् लोप्तुं लुप्तान् कर्त्तुं प्रभवति पुंस्त्वे तत्वेन याथार्थ्येन दृष्टे सति । पुरुषत्वव्याप्यकरचरणादि-मान्निितिसम्यज्ज्ञानो सतीत्यर्थः । स्थाणुताधीः पुनः न प्राणिता नैवभविष्यति ।। १४ ।।

**(अथ परदेवतापारमार्थ्याधिकारः)**

पूर्वश्लोकोक्ततत्त्वत्रयमध्ये पठित ईश्वरः को वेत्याशङ्क्य श्रियःपतिरेव वेदान्तैरीश्वरत्वेन प्रतिपाद्यत इत्याह–

**आत्मैक्यं देवतैक्यं त्रिकसमधिकता तुल्यतैक्यं त्रयाणाम्**
**अन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।**
**त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च**
**श्रीमन्नारायणो नः पतिरखिलतनुर्मुक्तिदोमुक्तभोग्यः ।। १५ ।।**

आत्मैक्यं परमार्थः देवतैक्यं परमार्थः, त्रिकसमधिकतातुल्यता परमार्थः त्रयाणामैक्यं परमार्थः त्रिभ्योऽन्यत्रैश्वर्यं परमार्थः, इत्याद्यनिपुणफणितीः सन्तो नाद्रियन्ते, किन्त्वखिलतनुर्मुक्तिदो मुक्तभोग्यः श्रीमन्नारायणो नः पतिरित्यमुमर्थं त्रय्यन्तैरेककण्ठैस्त-दनुगुणमनुव्यासमुख्योक्तिभिश्चाद्रियन्त इत्यन्वयः ।।

आत्मैक्यमिति । परदेवतात्रयात्समधिकोऽतिरिक्तः तस्य भावस्तत्ता उत्तीर्णः ब्रह्मवादः तुल्यता सर्वदेवतासाम्यवादः त्रयाणां ब्रह्मविष्णुरुद्राणामैक्यम् अभेदवादः । अन्यत्र विष्णुव्यतिरिक्तेषु । ऐश्वर्यं पारम्यं देवतान्तरपारम्यवादः । इत्यादिशब्देन शून्यवादादेर्ग्रहणम् । अनिपुणफणितीः– अनिपुणानामज्ञानिनां फणितीः शास्त्राणि सन्तो देवतापारमार्थ्यवेदिनो नाद्रियन्ते न गणयन्ति ईश्वरं को वेत्ति चेत्तत्राह– त्रय्यन्तैरिति । एककण्ठैः परस्पराविरोधिभिः त्रय्यन्तैर्वेदान्तैः तदनुगुणाभिः वेदान्तानुसारिणीभिः मनुव्यासमुख्यानामुक्तिभिः स्मृतीतिहासरूपाभिः प्रामाण्याभिश्च । श्रीमान्नित्येतदीश्वरनिरूपकम् । नारायणो नः पतिः–ईश्वरः 'शरीरवाचिशब्दानां शरीरिपर्य्यन्तत्व' नियमात् । ब्रह्मादिपारम्यप्रतिपादकशब्दानां शरीरिणि नारायण एव पर्यवसानमाह– अखिलतनुरिति । निखिलचेतनाचेतनशरीरकः मुक्तिदः मोक्षप्रदः मुक्तभोग्यः मुक्तानुभाव्यः । नारायण एव नः पतिः नान्यः कश्चिदस्तीति भावः ।। १५ ।।

नन्वखिलतनुरित्यनेन भगवतो ब्रह्मरुद्रादिशरीरकत्वमुक्तं तन्न सङ्गच्छते । वैपरीत्यस्यापि सुवचत्वादित्याशङ्क्य ''नारायणाद् ब्रह्मा जायते नारायणाद्रुद्रो जायते । एको ह वै नारायण आसीत् । न ब्रह्मा नेशानो न द्यावापृथिवी'' इत्यादिभिः ब्रह्मादीनां सृज्यत्वसंहार्य्यत्वश्रवणात्, वैपरीत्यशङ्काकर्त्तुं न शक्यत इत्याह—

**जनपदभुवनादिस्थानजैत्रासनस्थेषु**
**अनुगतनिजवार्त्तं नश्वरेष्वीश्वरेषु ।**
**परिचितनिगमान्तः पश्यति श्रीसहायं**
**जगति गतिमविद्यादन्तुरे जन्तुरेकः ।। १६ ।।**

अविद्यादन्तुरे जगति परिचितनिगमान्त एको जन्तुर्जनपदभुवनादि-स्थानजैत्रासनस्थेष्वीश्वरेष्वनुगतनिजवार्त्तं नश्वरेषु सत्सु श्रीसहायं गतिं पश्यतीत्यन्वयः ।।

जनेति । जनपदो देशः भुवनानीन्द्रादिलोकाः आदि शब्देन ब्रह्माण्डमुच्यते । तद्रूपाणि स्थानानि तान्येव जैत्रासनानि तेषु तिष्ठन्तीति । जैत्रासनस्थेष्वीश्वरेषु

ब्रह्मादिषु । अनुगतनिजवार्त्तम्– अनुगता अनुवर्त्तमाना निजवार्त्ता उत्पत्तिवार्ता यथा भवति तथा । नश्वरेषु नाशशीलेषु सत्सु परिचितनिगमान्तः वेदान्तश्रमवानेको जन्तुः अविद्यया प्रारब्धकर्मरूपया दन्तुरे निम्नोन्नते जगति श्रीसहायं भगवन्तं श्रियःपतिं गतिमुपायं पश्यति – अवधारयति । ब्रह्मरुद्रादीनामुत्पत्तिविनाशघटी-यन्त्रपतितत्वेन उपायापायाभावात् तदैश्वर्यस्य सुवृत्ततारतम्यनिबन्धनत्वेन भगवन्तमेवोपायत्वेन निश्चिनोतीति भावः ।। १६ ।।

**(अथ मुमुक्षुत्वाधिकारः)**

अथ आत्मानात्मज्ञानवतः संसारो दुस्सहो भवतीत्याह–

**कालावर्त्तान्प्रकृतिविकृतीः कामभोगेषु दोषान्**
**ज्वालागर्त्तप्रतिमदुरितोदर्कदुःखानुभूतिम् ।**
**याथातथ्यं स्वपरनियतं यच्च दिव्यं पदं तत्**
**काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम् ।। १७ ।।**

कालावर्तान् प्रकृतिविकृतीः कामभोगेषु दोषान् ज्वालागर्त्तप्रतिमदुरितो-दर्कदुःखानुभूतिं स्वपरनियतं याथातथ्यं यच्च तद्दिव्यं पदं काराकल्पं वपुरपि विदन् को बन्धं तितिक्षेतेत्यन्वयः ।।

कालेति । कालाः शीतोष्णप्रधाना त एवावर्त्ताः । यद्वा, कालाः श्रुतिचोदिता उपरागादयस्तेषामावर्त्तत्वनिरूपणम् । तान् कालभेदान् स्वरूपविरोधिबुद्धिजनकत्वेनेति सम्प्रदायः । प्रकृतिविकृतीः–''अष्टौ प्रकृतयः षोडश विकाराः' इत्युक्तान् प्रकृतिमहदहङ्कारपञ्चतन्मात्ररूपान् । कामभोगेषु काम्यन्त इति कामाः स्वर्गादयस्तेषां भोगेष्वनुभवेषु दोषान्–अल्पास्थिरत्वादीन् ज्वालागर्तेनाऽग्निज्वालाकल्पेन प्रतिमो येषां तानि च तानि दुरितानि तान्युदर्क उत्तरकालफलं यस्यास्ताम् । दुःखानुभूतिं वर्त्तमानदुःखानुभवं यस्मिन् परे भगवति च नियतं स्वाभाविकं याथातथ्यं शेषशेषिभावं 'दिव्यं पद' मित्यादिभिरुक्तं यत्तत्पदं च काराकल्पं बन्दिग्रहतुल्यं वपुरपि विदन्–जानन् को वा प्रकृतिबन्धं तितिक्षेत सहेत । विदन्निति वर्तमाननिर्देशेन बन्धनिवर्त्तये

विषयदोषानुसन्धानं जीवपरमात्मस्वरूपानुसन्धानश्च परमप्राप्य स्वरूपानुसन्धानश्च यावज्जीवं कर्त्तव्यमिति सुच्यते ।। १७ ।।

एतादृशानुसन्धाता भुवि दुर्लभ इत्याह—

**विषमिव बहिष्कुर्वन् धीरो बहिर्विषयात्मकं**
**परिमितरसस्वात्मप्राप्तिप्रयासपराङ्मुखः ।**
**निरवधिमहानन्दब्रह्मानुभूतिकुतूहली**
**जगति भविता दैवात्कश्चिज्जिहासितसंसृतिः ।। १८ ।।**

जगति दैवाद्धीरो बहिर्विषयात्मकं विषमिव बहिष्कुर्वन् परिमितरसस्वात्मप्राप्ति-प्रयासपराङ्मुखो निरवधिमहानन्दब्रह्मानुभूतिकुतूहली कश्चिज्जिहासितसंसृति-र्भवितेत्यन्वयः ।।

विषेति । धीरो विषयदर्शनेऽप्यविकारी बहिर्विषयात्मकं शब्दस्पर्शादिबाह्य-विषयजातं विषमिव बहिष्कुर्वन् परिहरन् परिमितरसा परिच्छिन्नानन्दा या स्वात्मप्राप्तिः कैवल्यं तद्विषये प्रयासः तत्र पराङ्मुखः । आयासो महान् फलन्तु परिमितमितिभावः । जिहासिता त्यक्ता संसृतिः स्वर्गाद्यैश्वर्य्यं येन सः तथोक्तः निरवधिः कालपरिच्छेदरहितः आनन्दो यया सा च ब्रह्मानुभूतिश्च तस्याः कुतूहली पुरुषः जगति दैवादस्मद्भागधेयवशात् कश्चिद्भविता । ऐश्वर्यकैवल्यविरक्तिर्ब्रह्म-प्राप्तिकामना च महात्मनः कस्यचित् सम्भवतीति भावः ।। १८ ।।

## (अथाधिकारिविभागाधिकारः)

अथ प्रपत्तेरप्युपायत्वे लघूपायतया सर्वेषां तत्रैव प्रवृत्तौ भक्तेरननुष्ठानलक्षणा-प्रामाण्यप्रसङ्ग इत्याशङ्क्याऽधिकारभेदेनाऽविरोधं दर्शयन् 'विकल्पोऽविशिष्टफलत्वा' दिति सूत्रोक्तं भक्तिप्रपत्त्योः समविकल्पं दर्शयति–

**मुमुक्षुत्वे तुल्ये सति च मधुविद्यादिषु यथा**
**व्यवस्था संसिद्ध्येदधिकृतिविशेषेण विदुषाम् ।**
**विकल्पेत न्यासे स्थितिरितरविद्यासु च तथा**
**नियत्या वैजात्यं नियमयितुमेवं प्रभवति ।। १९ ।।**

विदुषां मुमुक्षुत्वे तुल्ये सति च यथाऽधिकृतिविशेषेण मधुविद्यादिषु व्यवस्था संसिद्ध्येत्, तथा न्यासे इतरविद्यादिषु च स्थितिर्विकल्पेत, एवं नियमयितुं नियत्या वैजात्यं प्रभवतीत्यन्वयः ।।

मुमुक्ष्विति । विदुषां शेषत्वज्ञानवतां मुमुक्षुत्वे मोक्षेच्छावत्वे तुल्ये सत्यपि मधुविद्यादिषु उपासनेषु । आदिशब्देन दहरादीनां ग्रहणम् । अधिकृतिविशेषेण तत्तत्कामनारूपाधिकारभेदेन यथा यद्व्यवस्था समविकल्पादिरूपा संसिद्ध्येत् सम्भवति तथा तद्वन्न्यासे प्रपत्तौ इतरविद्यासूपासनेषु च स्थितिरनुष्ठानं विकल्पेत तत्समविकल्पश्चोदिता । ननु तत्तत्कामनारूपाधिकारभेदे वा किन्नियामकमित्याशङ्क्य भगवत्स्वातन्त्र्यमेव नियामकमित्याह – नियत्येति । स्वतन्त्रदैवतस्य भगवतो वैजात्यं विजातिभावः । स्वातन्त्र्यमिति यावत् । एवं नियमयितुम्–एतादृशकामनाभेद-मुत्पादयितुं प्रभवति शक्नोति । अयम्भावः. यथा साक्षाद्ब्रह्मप्राप्तिसाधने दहरोपासने जागरूके सति व्यवस्थितिहेतुब्रह्मप्राप्तिसाधनानां मध्वादीनामनुष्ठानमुत्सन्नं स्यादिति विरोधे वसुत्वावाप्तिपूर्वकब्रह्मप्राप्तिकामनारूपेणाधिकारिभेदेन परिहृत्य तत्कामनाभेदेषु भगवत एव कारणत्वं व्यवस्थाप्य मध्वादीनां बहुविधोपासनानां समानफलत्वेन यथा समविकल्पो निश्चितः तथा भक्तिप्रपत्त्योरपि शक्याशक्याधिकारिभेदेषु भगवत एव हेतुत्वे स्थापिते भक्त्या समानफलत्वात् प्रपत्तेः समविकल्पो युज्यत इति ।। १९ ।।

इदानीं प्रपत्तेरुपायत्वम् ''अद्वितीयं नगर'' मिति न्यायेन प्रशंसया स्थिरीकुर्वन् प्रपन्नद्वैविध्यमुखेन तयोरनुभवभेदमाह—

**प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदं**
**प्रपन्नश्च द्वेधा सुचरितपरीपाकभिदया ।**
**विलम्बेन प्राप्तिर्भजनसुखमेकस्य विपुलं**
**परस्याशु प्राप्तिः परिमितरसा जीवितदशा ।। २० ।।**

मुकुन्दः प्रपन्नादन्येषां निजपदं न दिशति, प्रपन्नश्च सुचरितपरिपाकभिदया द्वेधा एकस्य प्राप्तिर्विलम्बेन भजनसुखं विपुलं परस्याशु प्राप्तिः जीवितदशा तु परिमितरसेत्यन्वयः ।

प्रपन्नेति । मुकुन्दः सकलफलप्रदः परमात्मा प्रपन्नादन्येषां प्रपन्नव्यतिरिक्तानां निजपदं श्रीवैकुण्ठं न दिशति । उपासकस्याऽधिकारे सत्यपि प्रपत्तेरर्थवादः । प्रपन्नश्च सुचरितपरिपाकभिदया सुकृतपरिपाकेन भेदेन द्वेधा दृप्तार्त्तरूपेण द्विविधो भवति तयोरनुभवभेदमाह–एकस्येति । एकस्य दृप्तस्य विलम्बेन शरीरावसान-पर्य्यन्तकर्तव्यतया प्राप्तिर्भजनसुखं बहुलम्, परस्याशु तत्क्षणमेव प्राप्तिः जीवितदशा तु परिमितरसा । तस्य आर्तिप्रचुरतया गुणानुभवादेरवकाशाभावात्परिच्छिन्नानन्देत्यर्थः । केचित् प्रपन्नशब्देनाऽङ्गप्रपत्तिनिष्ठतयोपासकमपि संगृह्य स्वतन्त्रप्रपत्त्यङ्गप्रपत्तिनिष्ठतया प्रपन्नद्वैविध्यमभिधाय उपासकस्य प्रारब्धानुभवावसाने प्राप्तिः संतन्यमानब्रह्मध्यानजनितसुखं तु विपुलं, प्रपन्नस्य तु तच्छरीरावसानप्राप्तिः सन्तन्यमानध्यानसामर्थ्याभावाज्जीवितकालः-परिच्छिन्नानन्द इत्याहुः ।। २० ।।

### (उपायविभागाधिकारः)

अथेश्वर एव सिद्धसाधनमित्याह—

**उपायः स्वप्राप्तेरुपनिषदधीतस्स भगवान्**<br>
**प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती ।**<br>
**तदारोहः पुंसस्सुकृतपरिपाकेन महता**<br>
**निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः ।। २१ ।।**

स भगवान् स्वप्राप्तेरुपाय इत्युपनिषदधीतः तस्य प्रसत्त्यै प्रपदननिदिध्यासनगती उक्ते पुंसस्तदारोहो महता सुकृतपरिपाकेन स्यात् , तत्राप्यखिलनिर्माणनिपुणः स्वयमेव निदानमित्यन्वयः ।।

उपाय इति । स्वप्राप्तेः ब्रह्मप्राप्तेः सः वात्सल्यादि प्रपत्तव्यगुणविशिष्टो भगवान् ज्ञानशक्त्याद्युपास्यगुणविशिष्टः स एव उपनिषदधीतः वेदान्तप्रतिपादितः उपायः सिद्धोपाय इत्यर्थः । तर्हि भक्तिप्रपत्त्योरप्रयोजकत्वं स्यादित्याह–प्रपदनेति । प्रपदननिदिध्यासन एव गती – उपायौ तस्य सिद्धोपायस्य प्रसत्त्यै – अनुग्रहाय उक्ते प्रमाणैर्विहिते । एतावन्तं कालमजायमानो भक्तिप्रपत्त्योरन्वयः कथमिदानीं स्यात्तत्राह–पुंसश्चेतनस्य महता वाङ्मनसाऽपरिच्छेद्येन सुकृतपरिपाकेन तदारोहः तयोर्भक्तिप्रपत्त्योरन्वयः ।

सुकृतपरिपाकेऽपि को हेतुरित्याशङ्क्याह-अखिल-ब्रह्माण्डनिर्माण-समर्थः स्वयं भगवान्निदानम्–आदिकारणम् ''निदानं त्वादिकारण'' मित्यमरः ।। २१ ।।

ननु कर्मज्ञानयोरुपायत्त्वं प्रपत्तेरङ्गत्वं पौराणिकैरुच्यते तत्कथं भक्तिप्रपत्त्योरेवोपायत्वं निश्चीयत इत्याशङ्क्य पौराणिकोक्तीनामन्यथासिद्धिं दर्शयति—

**कर्मज्ञानमुपासनञ्च शरणव्रज्येति चावस्थितान्**
**सन्मार्गानपवर्ग-साधनविधौ सद्वारकाद्वारकान् ।**
**एकद्व्याकृतियोगसम्भृतपृथग्भावानुभावानिमान्**
**सम्यक् प्रेक्ष्य शरण्यसारथिगिरामन्ते रमन्ते बुधाः ।। २२ ।।**

बुधाः सद्वारकाद्वारकेऽपवर्गसाधनविधौ कर्म ज्ञानमुपासनं शरणव्रज्येति चावस्थितानिमान् सन्मार्गानेकद्व्याकृतियोगसम्भृतपृथग्भावानुभावान् सम्यक् प्रेक्ष्य शरण्यसारथिगिरामन्ते रमन्त इत्यन्वयः ।।

बुधा इति । कर्म फलाभिसन्धिं विनाऽनुष्ठीयमानं श्रुतिचोदितं कर्म, ज्ञानं प्रकृतविलक्षणप्रत्यगात्मज्ञानम् । उपासनं यमनियमाद्यष्टाङ्गसहिता भक्तिः । शरणव्रज्या नाम आनुकूल्यसङ्कल्पादिपञ्चाङ्गोपेता प्रपत्तिः । इति चानेन प्रकारेणाऽप-वर्गसाधनविधौ मोक्षसाधनत्वेऽवस्थितान्–शास्त्रप्रतिपादितान् सद्वारकान् अद्वारकान् । सद्वारकत्वं कर्मज्ञानयोः, अद्वारकत्वं भक्तेः, सद्वारकाद्वारकत्वं प्रपत्तेरिति निष्कर्षः । अत एव एकाकृतियोगेन द्व्याकृतियोगेन च सम्भृतः सम्पादितः पृथग्भाव एवानुभावो येषां तान् । एकाकृतियोगेन कर्मज्ञानभक्तीनां पृथग्भावः, द्व्याकृतियोगेन प्रपत्तेः पृथग्भावः । इमान् सन्मार्गान् सम्यक् प्रेक्ष्य कर्मज्ञानयोरुपायत्वप्रतिपादकानां पुराणवाक्यानामङ्गत्वे तात्पर्य्यम् । भक्तेश्शक्ताधिकारत्वं प्रपत्तेरङ्गाङ्गित्वविशिष्टत्वञ्च निश्चित्य शरण्यसारथि-गिरामन्ते शरण्यश्चासौ सारथिश्च श्रीकृष्णः तस्य गिरामन्ते 'सर्वधर्मा' निति श्लोके विहिते प्रपदने बुधा रमन्ते तत्रैवासक्ता भवन्तीत्यर्थः ।।

केचित्तु कर्मेत्यादि श्लोकव्याख्यानमेवं वर्णयन्ति–बुधाः ''तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'' ''विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' 'इयाज सोऽपि सुबहून्' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिषु सद्वारकापवर्गसाधनबोधकेषु, 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' 'ब्रह्मविदाप्नोति

परम्' 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यद्वारकापवर्गसाधनबोधकेषु च शास्त्रेष्वित्यर्थः । कर्म-कर्मयोगः । ज्ञानम्–ज्ञानयोगः उपासनं भक्तियोगः । शरणव्रज्या च शरणवरणं चेत्यवस्थितान् प्रतिपाद्यतयाऽवस्थितान् सन्मार्गान् समीची नान्मोक्षमार्गान् । एकद्व्याकृतीत्यादि । एकस्य भरन्यासस्य द्वाभ्यामाकृतिभ्यां साधनत्वसाधनसाधनत्वरूपाभ्यां योगेन सम्भृतः सम्पादितः पृथग्भावेन केवलसाधनभूतभक्तिमात्रसाधनात् कर्मयोगाद् ज्ञानयोगात् , केवलप्रयोजनमात्रसाधनमात्रसाधनभूताद्भक्तियोगाच्च पार्थक्येनानुभावो माहात्म्यं येषु तानित्यर्थः । द्वे च त आकृती च द्व्याकृती तयोर्योगः तेन सम्भृतः पृथग्भावेनानुभावो यस्य सः तथोक्तः । एकद्व्याकृतियोगसम्भृतपृथग्भावो येषु ते तथोक्तास्तान् संयक् प्रेक्ष्य कर्मज्ञाने साधनभूतभक्तिमात्रसाधकत्वेन भक्तिं मोक्षादिपुरुषार्थमात्रसाधकत्वेन भरन्यासं मोक्षादिपुरुषार्थस्य तत्साधनभूतभक्त्यादेश्च साधकत्वरूपाकारद्वययोगितया च ज्ञात्वा । एतेषामुपायानामेवम्विधाकारयोगकृतपरस्परवैलक्षण्यमुत्तरोत्तराधिक्यश्च सम्यग्ज्ञात्वेत्यर्थः । शरण्यसारथिगिरां 'सर्वस्य शरणं सुहृत्' 'गतिर्नारायणः' इत्याद्युक्तप्रकारेण सर्वशरणस्य क्रीडार्थं सारथेः कृष्णस्य गिरां श्लोकानामन्त उक्ते चरमश्लोके रमन्ते चरमश्लोकार्थभूतभरन्यासोपादानेविलम्भाक्षमाणानामुपायान्तरानुष्ठानाशक्तानां चोत्कटेच्छा जायत इति तन्निष्ठा भवन्तीति भावः ।। २२ ।।

### (प्रपत्तियोग्याधिकारः)

अथ सर्वेषामुपासनानां साधारणादिकारान् ज्ञानशक्त्यादीन् निरूपयन् भक्तेस्त्रैवर्णिकान्वयनिरूपणमुखेन प्रपत्तेः सर्वयोग्यतां दर्शयति—

**अर्थित्वेन समर्थता त्रिकतनुः सम्पिण्डिताऽधिक्रिया**<br>**सा चाष्टाङ्गषडङ्ग-योगनियतावस्था व्यवस्थापिता ।**<br>**श्रौती सर्वशरण्यता भगवतः स्मृत्याऽपि सत्यापिता**<br>**सत्यादिष्विव नैगमेष्वधिकृतिस्सर्वास्पदे सत्पथे ।। २३ ।।**

त्रिकतनुः समर्थता अर्थित्वेन सम्पिण्डिताधिक्रिया सा चाष्टाङ्गषडङ्गयोगनियतावस्थाव्यवस्थापिता भगवतस्सर्वशरण्यता श्रौती भगवतस्स्मृत्यपि सत्यापिता अतः सर्वास्पदे सत्पथे नैगमेषु सत्यादिष्विवाधिकृतिः सिद्ध्येदित्यन्वयः ।।

अर्थीति । अर्थित्वेन विलम्बसहिष्णुत्वेन च समर्थता त्रिकतनुः । त्रिकं ज्ञानसामर्थ्यमनुष्ठानसामर्थ्यं शास्त्रापर्युदस्तत्वरूपमुपपत्तिसामर्थ्यम् । अर्थित्वेन सह समर्थता त्रिकतनुरधिकारो यस्या भक्तेः सा तथोक्ता सम्पिण्डिता सम्मिलिता अधिक्रिया अधिकारो यस्यास्तथोक्ता ज्ञानशक्त्यादीनाश्चतुर्णां मेलने सत्येव भक्तावधिकारः, नत्वेकैकयोगेनेतिभावः । सा भक्तिरष्टाङ्गैष्षडङ्गैर्वा योगेन नियता त्रैवर्णिकमात्रनियतावस्था यस्यास्तथोक्ता । व्यवस्थापिता । श्रुत्यादिभिरितिशेषः । भगवतश्शरण्यता वर्णाश्रमानादरेण सकलप्रपत्तव्यता श्रौती 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यादिश्रुतिसिद्धया स्मृत्यापि 'न जातिभेदं न कुलं न लिङ्गं न गुणक्रियां । सर्व एव प्रपद्येरन्सर्वधातारमच्युतम्' इत्यादिस्मृतिभिश्च सत्यापिता परमार्थीकृता । ननु श्रुतिविहितेषु कथमत्रैवर्णिकानामधिकार इत्याशङ्क्य दृष्टान्तप्रदर्शनेन दूरीकरोति– नैगमेष्विति–नैगमेषु 'सत्यं वदे'त्यादिनिगमविहितेषु सत्यादिष्विव । आदिशब्देन तटाकनिर्माणादिसंग्रहः । सर्वास्पदे सकलान्वययोग्ये सत्पथे सुकरोपायतया सन्मार्गे प्रपत्तौ । अधिकृतिः– स्त्रीशूद्राणामधिकारः । उपपाद्यत इति शेषः ।। २३ ।।

अथ प्रपत्तेरसाधारणाधिकारान्निरूपयन् प्रपत्तेश्च विश्वासः प्रधानाङ्गमिति सूचयन् विशिष्टमेव प्रपत्तव्यमित्याह—

**भक्त्यादौ शक्त्यभावः प्रमितिरहितता शास्त्रतः पर्य्युदासः**
**कालक्षेपाक्षमत्वं त्वितिनियतिवशादापतद्भिश्चतुर्भिः ।**
**एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियाः संश्रयन्ते**
**सन्तः श्रीशं स्वतन्त्रप्रपदनविधिना मुक्तये निर्विशङ्काः ।। २४ ।।**

एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियास्सन्तो नियतिवशादापदद्भिः भक्त्यादौ शक्त्यभावः प्रमितिरहितता शास्त्रतः पर्युदासः कालक्षेपाक्षेमत्वमिति चतुर्भिर्निर्विशङ्काभूत्वा मुक्तये स्वतन्त्रप्रपदनविधिना श्रीशं संश्रयन्त इत्यन्वयः ।।

भक्त्येति । भक्त्यादौ । आदिशब्देन कर्मज्ञानयोर्ग्रहणम् । भक्तौ तदङ्गयोः कर्मज्ञानयोश्च शक्त्यभावोऽनुष्ठानासामर्थ्यं । प्रमितिरहितता भक्त्यादिगोचरज्ञानाभावः शास्त्रतः पर्य्युदासः । अत्रैवर्णिकत्वम् कालक्षेपाक्षमत्वम्–आर्तिः । नियतिवशात्–

दैववशात् इत्यापदद्भिरागतैश्चतुर्भिस्तैरधिकारैरेकयोगेन द्वियोगेन त्रियोगेन चतुर्योगेन च व्यतिर्भिदुरा विभक्ता निजाधिक्रिया निजाधिकारो येषां ते सन्तो मुमुक्षवो निर्विशङ्काः सन्तः । अनेन महाविश्वासस्सूचितः । स्वतन्त्रप्रपदनविधिना पृथगुपायभूत-प्रपत्त्यनुष्ठानेन मुक्तये मोक्षाय श्रीशंलक्ष्मीविशिष्टं भगवन्तं संश्रयन्ते प्रपद्यन्ते शरणं गच्छन्तीत्यर्थः ।। २४ ।।

## (परिकरविभागाधिकारः)

अथ 'समर्थः कारुणिकः प्रपत्तव्य' इति न्यायं सूचयन् 'यद्यत्साधनं तत्तत्साङ्ग' मिति न्यायेन मोक्षसाधनस्य प्रपदनस्याङ्गानि दर्शयति—

**इयानित्थम्भूतस्सकृदयमवश्यंभवनवान्**
**दयादिव्याम्भोधौ जगदखिलमन्तर्य्यमयति ।**
**भवध्वंसोद्युक्ते भगवति भरन्यासवपुषः**
**प्रपत्तेरादिष्टः परिकरविशेषश्श्रुतिमुखैः ।। २५ ।।**

दया दिव्याम्भोधावखिलजगदन्तर्य्यमयति भवध्वंसोद्युक्ते भगवति भरन्या-सवपुषः प्रपत्तेरयं परिकरविशेषः श्रुतिमुखैरियानित्थम्भूतः सकृदवश्यं भवनवानादिष्ट इत्यन्वयः ।।

इयानिति । दयादिव्याम्भोधौ – करुणाप्रकृतसमुद्रे । अनेन कारुणिकत्व-मुक्तम् । अखिलम् – चेतनाचेतनात्मकञ्जगदन्तःप्रविश्य यमयति नियमयति । अतएव भवस्य संसारस्य ध्वंसे निवर्त्तने उद्युक्ते– उन्मुखे भगवति ज्ञानादि-गुणसम्पन्ने । अनेन सामर्थ्यमुक्तम् । तस्मिन्विषये भरन्यास एव वपुरङ्गं यस्याः तस्याः प्रपत्ते श्रुतिमुखैर्वेदान्तैरादिष्ट उपदिष्टः । इयान् पञ्चत्वसङ्ख्यायुक्त इत्थम्भूत आनुकूल्या-दिसङ्कल्पप्रकारः परिकरविशेषोऽङ्गसमूहः । अयं सकृन्न्यासात्पूर्वमेक-वारमवश्यं भवनवान् – अवश्यानुष्ठेय इत्यर्थः ।। २५ ।।

इदानीं षडङ्गपक्षमपि सूचयन् तेषामङ्गानां प्रयोजनमाह—

**प्रख्यातः पञ्चषाङ्गः सकृदिति भगवच्छासनैरेष योगः**
**तत्र द्वाभ्यामपायाद्विरतिरनितरोपायतैकेन बोध्या ।**

**एकेन स्वान्तदार्ढ्यं निजभरविषयेऽन्येन तत्साध्यतेच्छा**
**तत्त्वज्ञानप्रयुक्ता त्विह सपरिकरे तादधीन्यादिबुद्धिः ।। २६ ।।**

एष योगः पञ्चषाङ्गः सकृदिति भगवच्छासनैः प्रख्यातः तत्र द्वाभ्याम पायाद्विरतिः, एकेनानितरोपायता बोध्या, एकेन स्वान्तदार्ढ्यम्, अन्येन निजभर विषये तत्साध्यतेच्छा सपरिकरे इह तादधीन्यादिबुद्धिः तत्त्वज्ञानप्रयुक्तेत्यन्वयः ।।

प्रख्येति । एष योगः प्रपत्त्याख्य उपायः भगवतश्शासनैः पाञ्चरात्रादिभिः भगवच्छास्त्रैः सकृत्पञ्चषाङ्ग इति प्रख्यातः प्रतिपादितः तत्र । तेष्वङ्गेषु मध्ये द्वाभ्यामानुकूल्यसङ्कल्पप्रातिकूल्यवर्जनाभ्याम् । अकृत्यकरणकृत्याकरणादपायाद्विरतिरपायान्निवृत्तिर्बोध्या । अकृत्यकरणवत्कृत्याकरणस्याप्यपायकोटिनिवेशादानुकूल्यसङ्कल्पेनाप्यपायान्निवृत्तिरेव बोध्यते । एकेन कार्पण्येनानितरोपायता – उपायान्तरशून्यता बोध्या । एकेन महाविश्वासेन स्वान्तदार्ढ्यं चित्तस्थैर्य्यं बोध्यम् । अन्येन गोप्तृत्ववरणेन निजभरविषये – आत्मीयपुरुषार्थविषये तत्साध्यतेच्छा सिद्धोपायसाध्यताबुद्धिः सपरिकरे साङ्गे प्रपदने तादधीन्यादिबुद्धिरीश्वराधीनत्वादिबुद्धिः तत्त्वज्ञानेन प्रयुक्ता सम्पादिता शेषत्वज्ञानाख्येन सिद्धोपायाधीनत्वबुद्धिर्बोध्येत्यर्थः ।। २६ ।।

## (साङ्गप्रपदनाधिकारः)

अथ साङ्गप्रपदनमाह—

**अभीष्टे दुस्साध्ये स्वत इतरतो वा क्वचन तत्**
**भरन्यासं याच्ञान्वितमभिवदन्ति प्रपदनम् ।**
**इतः पश्चादस्मद्यतननिरपेक्षेण भवता**
**समर्थ्योऽसावर्थस्त्विति मतिविशेषं ननु विदुः ।। २७ ।।**

अभीष्टे स्वत इतरतो वा दुस्साध्ये सति क्वचन याच्ञान्वितं तद्भरन्यासं प्रपदनमभिवदन्ति ननु इतः पश्चादस्मद्यतननिरपेक्षेण भवताऽसावर्थ समर्थ्य इति मतिविशेषं विदुरित्यन्वयः ।।

अभीति । स्वतः स्वेनेतराद्ब्रह्मरुद्रादिभिर्वाऽभीष्टे मोक्षे दुस्साध्ये साध-यितुमशक्ये

सति क्वचन समर्थे कारुणिके श्रियःपतौ याच्ञान्वितं याचनयोद्यतं त्वं मे गोप्ता भवेति प्रार्थनान्वितं तद्भरन्यासं तस्याभीष्टस्य यो भरो यत्नः तस्य न्यासं निक्षेपं प्रपदनमिति वदन्ति । अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकं तदेकोपायता याच्ञा प्रपत्तिः शरणागतिरित्यादिभिः याच्ञापूर्वकभरन्यासमेव प्रपत्तिं लक्षयन्ति । ऋषय इति शेषः । ननु निरवयवस्य यत्नस्य कथं निरपेक्षत्वमित्याशङ्कामुत्तरार्द्धेन परिहरति – इदं न्यासात्मकं प्रपदनं मतिविशेषं ज्ञानविशेषं न विदुरिति न किन्तु विदुरेव । मतिविशेषमभिनीय दर्शयति–इतः पश्छादिति । इतः पश्चात्प्रपत्त्यनन्तरमस्मद्य-तननिरपेक्षेण भवता त्वया असावर्थः पुरुषार्थः समर्थ्यः साध्य इत्येतादृशं मतिविशेषं विदुः । प्रपत्त्यनन्तरमस्मद्व्यापारमनपेक्ष्य पुरुषार्थं साधयितेतिबुद्धि-विशेषस्यैव भरन्यासरूपत्वान्न कश्चिद्विरोध इति भावः ।। २७ ।।

प्रपन्नस्य कथं स्वयत्ननिवृत्तिरीश्वरो वा कथं यत्नन्नापेक्षत इत्याशङ्क्या-शक्तत्वादीश्वराधीनकर्तृत्वाच्च चेतनस्य पुनर्यत्नं नापेक्षत इति परिहरति–

**युग्यस्यन्दनसारथिक्रमवति त्रय्यन्तसन्दर्शिते**
**तत्त्वानां त्रितये यथार्हविविधव्यापारसन्तानिनि ।**
**हेतुत्वं त्रिषु कर्तृभाव उभयोः स्वाधीनतैकत्र तत्**
**स्वामिस्वीकृतयद्भरोऽयमलसस्तत्र स्वयं निर्भरः ।। २८ ।।**

युग्यस्यन्दनसारथिक्रमवति त्रय्यन्तसन्दर्शिते यथार्हविविधव्यापारसन्तानिनि तत्वानां त्रितये हेतुत्वं त्रिषु कर्तुभाव उभयोरेकत्र स्वाधीनताऽलसोयं तत्स्वामि-स्वीकृतयद्भरस्तत्र स्वयं निर्भर इत्यन्वयः ।।

युग्येति । युगं वहन्तीति युग्या अश्वाः, स्यन्दनो रथः, सारथिस्तत्प्रेरकः तेषां त्रयाणां क्रमः प्रकारः सोस्यास्तीति तद्वति धारकत्वाच्चेतनस्य युग्यसाम्यम् , अचितो धार्य्यत्वेन स्यन्दनसाम्यम्, उभयप्रेरकत्वेनेश्वरस्य सारथिसाम्यमिति विवेकः । त्रय्यन्तैः ''भोक्ता भोग्यं प्रेरितारश्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'' इत्यादिवेदान्तैः सन्दर्शिते सम्यग्विविच्य प्रतिपादिते तत्त्वानां चिदचिदीश्वराणां त्रितये यथार्हविविधव्यापारसन्तानिनि सति यथार्हं तत्तत्स्वरूपोचितं यथा भवति तथा विविधानामनेकप्रकाराणां व्यापाराणां सन्तानः कृतिरस्यास्तीति तस्मिन् सति ।

चिद्व्यापारा धर्मकामादिपुरुषार्थविषयाः, अचितः परिणामित्वादयः, ईश्वरस्य जगन्निर्माणादिविषया इति व्यापारक्रमः । तत्र तद्व्यापारविषये त्रिषु चिदचिदीश्वरेषु हेतुत्वं कर्तृभावः तद्व्यापारकर्तृत्वमुभयोर्जीवेश्वरयोः । एकत्र – ईश्वरे स्वाधीनकर्तृत्वं स्वाधीनहेतुत्वञ्च तत्स्वामी तयोश्चेतनाचेतनयोः स्वामी तेन स्वीकृतोऽङ्गीकृतः यस्य मोक्षस्य भरो येन स तथोक्तो भवतीतिशेषः । तत्र मोक्षविषयेऽलसोऽशक्तोऽयमधिकारी स्वयं निर्भरः ।। २८ ।।

## (अथ कृतकृत्याधिकारः)

एवं भरन्यासं निरूप्य फलतया तद्विशेषणभूतनैर्भर्य्यसिद्धेः कृतकृत्यत्वज्ञानाधीनत्वात्तत्सहेतुकं प्रदर्श्य तत्साध्यनैर्भर्य्यस्य फलमप्याह –

**समर्थे सर्वज्ञे सहजसुहृदि स्वीकृतभरे**
**तदर्थं कर्त्तव्यं न पुनरिह यत्किञ्चिदपि नः ।**
**नियच्छन्तस्तस्मिन्निरवधिमहानन्दजलधौ**
**कृतार्थीकुर्मः स्वं कृपणमपि कैङ्कर्य्यधनिनः ।। २९ ।।**

समर्थे सर्वज्ञे सहजसुहृदि भगवति स्वीकृतभरे सति इह पुनः नः कर्तव्यं किञ्चिदपि नास्ति तथापि तस्मिन्निरवधिमहानन्दजलधौ नियच्छन्तो वयं कैङ्कर्य्यधनिनः सन्तः कृपणमपि स्वं कृतार्थीकुर्मः इत्यन्वयः ।।

समेति । समर्थे–अनिष्टनिवृत्तिपूर्वकेष्टप्रापणदक्षे, सर्वज्ञे – तदुपयोगिज्ञानवति सहजसुहृति स्वाभाविकबान्धवे परमात्मनि स्वीकृतभरे स्वयमङ्गीकृत- मोक्षयत्ने सति इह संसारदशायां नोऽस्माकं शरणागतानां तदर्थं मोक्षार्थं पुनरपि सकृत्प्रपत्तिव्यतिरेकेणेति यावत् । किञ्चिदपि कर्तव्यं नास्ति । सकृद्भरन्यासानन्तरं न्यस्तभरस्य मोक्षार्थं कर्तव्यं किमपि नास्तीत्यर्थः । अन्यत्किञ्चित्कर्तव्यमित्याह – महानन्दस्य जलधौ तस्मिन् भगवति नियच्छन्तो न्यस्तभरा वयं कैङ्कर्य्यधनिनः कैङ्कर्य्याख्यद्रव्यवन्तः कृपणमपि– एतावत्कालं कैङ्कर्य्याभावाद्दीनमपि स्वात्मानं कृतार्थीकुर्मः । आत्मानमित्यनुवर्तते ।। २९ ।।

अथैश्वर्य्यकैवल्यहेतुभूतस्य कर्मणः स्वरूपेण त्यागात्प्रपत्त्यनन्तरं भगवदाज्ञाकैङ्कर्य्यमेव कर्तव्यमित्याह—

**भगवति हरौ पारङ्गन्तुं भरन्यसनं कृतं**
**परिमितसुखप्राप्त्यै कृत्यं प्रहीणमकृत्यवत् ।**
**भवति च वपुर्वृत्तिः पूर्वं कृतैर्नियतक्रमा**
**परमिह विभोराज्ञासेतुर्बुधैरनुपाल्यते ।। ३० ।।**

पारङ्गन्तुं भगवति हरौ भरन्यसनं कृतं, परिमितसुखप्राप्त्यै कृत्यं अकृत्यवत् प्रहीणं, वपुर्वृत्तिश्च नियतक्रमैः पूर्वकृतैर्भवति, अत इह बुधैर्विभोराज्ञासेतुः परमनुपाल्यत इत्यन्वयः ।।

भगवतीति । पारं परमपुरुषार्थं गन्तुं हरौ अनिष्टनिवर्तके भगवति, इष्टप्रापणोपयोगिज्ञानादिगुणयुक्त ईश्वरे भरन्यसनं प्रयत्तिः कृतेत्यर्थः । परिमितसुखप्राप्त्यै परिमितसुखयोरैश्वर्य्यकैवल्ययोः प्राप्त्यै कृत्यं कर्तव्यं कर्म अकृत्यवत् कलञ्जभक्षणादिनिषिद्धकर्मवत् प्रहीणं, स्वरूपेण त्यक्तम् । वपुर्वृत्तिश्च शरीरयात्रा च पूर्वं जन्मान्तरेषु कृतैः कर्मभिर्नियतोऽवर्जनीयः क्रमः सुखदुःखादि क्रमोयस्याः सा तथोक्ता भवति । शरीरयात्रायाः कर्मनिबन्धनत्वात् सुखदुःखक्रमस्यावर्जनीयत्वाच्च तदर्थं यत्नो न कर्तव्य इति भावः । इह प्रपत्त्युत्तरदशायां विभोः सर्वस्वतन्त्रस्य भगवत आज्ञाकैङ्कर्य्यं सैव सेतुर्मर्य्यादा बुधैः शेषत्वज्ञानवद्भिः परमवश्यमनुपाल्यते । भगवदनुवर्तनार्थमनुष्ठीयत इत्यर्थः ।। ३० ।।

**(स्वनिष्ठाभिज्ञानत्वाधिकारः)**

एवं भरन्यासफलनैर्भर्य्योपपादककृतकृत्यत्वमुक्त्वा कृतकृत्यताज्ञानहेतुभूतस्वरूपोपायपुरुषार्थेषु स्वस्य निष्ठा ज्ञातव्येति दर्शयंस्तस्या अत्यन्तानुकूलतया भरन्यासफलत्वञ्चाह–

**स्वरूपोपायार्थेष्ववितथनिविष्टस्थिरमतेः**
**स्वनिष्ठाभिज्ञानं सुभगमपवर्गादुपनतात् ।**
**प्रथिम्ना यस्यासौ प्रभवति विनीतः स्थगयितुं**
**गभीरान् दुष्पूरान् गगनमहतश्छिद्रनिवहान् ।। ३१ ।।**

स्वरूपोपायार्थेष्ववितथनिविष्टस्थिरमतेः स्वनिष्ठाभिज्ञानमुपनतादपवर्गात्सुभ गमूयस्य

प्रथिम्नाऽऽसौ विनीतः गभीरान् दुष्पूरान् गगनमहतश्छिद्रनिवहान् स्थगयितुं प्रभवतीत्यन्वयः ।।

स्वरूप इति । स्वरूपोपायार्थेषु स्वरूपं – भगवच्छेषत्वमुपायो भगवति विषये कृता प्रपत्तिरर्थो भगवत्कैङ्कर्य्यरूपपुरुषार्थः, तेषु त्रिष्वपि अवितथं समर्थं यथा भवति तथा निविष्टा स्थिरा मतिर्य्यस्य सस्तथोक्तः । तस्य प्रपन्नस्य अन्यशेषत्वानुसन्धानाभावे स्वरूपं, उपायान्तराप्रवेशेन प्रपत्तौ, प्रयोजनान्तर-प्रावण्याभावेन पुरुषार्थे च स्थिरबुद्धेः प्रपन्नस्य स्वनिष्ठाभिज्ञानं स्वस्य निष्ठानुगुणानुभव-कैङ्कर्य्यादिरूपवृत्तिः सैवाभिज्ञानं प्रपन्नचिन्हम् । उपनताद्धस्तगतादपवर्गान्मोक्षात्सुभगं मनोहरम् । कुत इत्याशङ्क्य हेतुमाह– असाविति । विनीतः गुरुणा शिक्षितः असौप्रपन्न यस्यस्वनिष्ठाभिज्ञानस्य प्रथिम्ना वैभवेन गभीरान् अगाधान् अतएव दुष्पूरान् केनापि पूरयितुमशक्यान् गगनमहत आकाशवद्विस्तृतान्छिद्राणां पुत्रेषणादीनां निवहान् स्थगयितुं निराकर्तुं प्रभवति समर्थो भवति ।। ३१ ।।

**स्वापोद्बोधव्यतिकरनिभे भोगमोक्षान्तराले**
**कालं कञ्चिज्जगति विधिना केनचित्स्थाप्यमानाः ।**
**तत्त्वोपायप्रभृति विषयेस्वाभिदत्तां स्वनिष्ठां**
**शेषां कृत्वा शिरसिकृतिनश्शेषमायुर्नयन्ति ।। ३२ ।।**

केनचिद्विधिना स्वापोद्बोधव्यतिकरनिभे भोगमोक्षान्तराले कञ्चित्कालं जगति स्थाप्यमानाः कृतिनः तत्त्वोपायप्रभृतिविषये स्वामिदत्तां स्वनिष्ठां शिरसि शेषां कृत्वा शेषमायुर्नयन्तीत्यन्वयः ।।

स्वापविति । स्वापोद्बोधयोर्निद्राजागरणयोर्व्यतिकरस्संपर्कस्तत्तुल्ये शेषत्व-ज्ञानोदयात् केवलस्वापतुल्यतापि नास्ति प्रकृतिसम्बन्धात् केवलोद्बोधतुल्यतापि नास्ति, अतस्तदुभयसं-पर्कतुल्यता । भोगो वर्त्तमानसुखदुःखानुभवः मोक्षो-भाविपुरुषार्थस्तयोरन्तराले मध्यकालेऽभ्युपगतव्यतिरिक्तानां सर्वेषां कर्मणां विनाशात्केवलं भोगोऽपि न, केवलं मोक्षोऽपि न, अतस्तदन्तरालत्वम् । जगति–अस्मिंल्लोके केनचिद्विधिना दृष्टत्वापादकेन केनचिददृष्टेन कञ्चित्कालं शरीरावस्थानपर्य्यन्तकालं स्थाप्यमानाः प्रपन्नाः, तत्वं स्वरूपमुपायः स्वरूपानु-रूपोपायः । प्रभृतिशब्देन पुरुषार्थ उच्यते । स्वरूपोपायपुरुषा-

र्थविषये स्वामिदत्तां स्वस्य निष्ठाम्–अध्यवसायं शिरसि शेषां – पट्टवस्त्रं कृत्वा कृतिनो विवेकिनश्शेषमायुः–आयुश्शेषं नयन्ति कालक्षेपं कुर्वन्ति ।। ३२ ।।

(उत्तरकृत्याधिकारः)

**सन्तोषार्थं विमृशति मुहुः सद्भिरध्यात्मविद्यां**
**नित्यं ब्रूते निशमयति च स्वादुसुव्याहृतानि ।**
**अङ्गीकुर्वन्ननघललितां वृत्तिमादेहपातात्**
**दृष्टादृष्टस्वभरविगमे दत्तदृष्टिः प्रपन्नः ।। ३३ ।।**

दृष्टादृष्टस्वभरविगमे दत्तदृष्टिः प्रपन्न आदेहपातादनघललितां वृत्तिमङ्गीकुर्वन् सन् अध्यात्मविद्यां सन्तोषार्थं मुहुः सद्भिस्सह विमृशति, किञ्च स्वादुसुव्याहृतानि नित्यं ब्रूते निशमयतीत्यन्वः ।

सन्तोषेति । प्रपन्नः सद्भिः परमैकान्तिभिः सहाध्यात्मविद्यां जीवपरमाया-याथात्म्यप्रतिपादकविद्यां सन्तोषार्थं जीवपरमात्मस्वरूपानुसन्धानार्थं मुहुः विमृशति, व्याहृतानि परहिंसोपयोगिश्येनयागादिप्रतिपादकानि । सुव्याहृतानि–ज्योतिष्टो-मादिप्रतिपादकानि, स्वानुसुव्याहृतानि मोक्षमात्रप्रतिपादकानि तान्येव शिष्येभ्यो नित्यं ब्रूते स्वयमाचार्येभ्यो निशमयति । निशमयतीति णिच् अनघाम् उपायापायरहितां ललितां पुरुषार्थवद्भोग्यां वृत्तिं प्रपत्त्युत्तरकालकर्तव्याम् आदेहपातादेहपातपर्य्यन्तमङ्गीकुर्वन्–आचरन् दृष्टं देहयात्रा अदृष्टमात्मयात्रा उभयोर्विषये स्वस्य भरोयत्नः तस्य विगमे दत्तदृष्टिः निहितचक्षुः । भवेदितिशेषः ।। ३३ ।।

प्रपन्नो मन्त्रानुसन्धानजनितसुखेनैव कालं नयतीत्याह–

**प्रणयिनमिव प्राप्तं पश्चात्प्रिया स्वसमन्वितं**
**महति मुहुरामृष्टे दृष्ट्वा मनौ मणिदर्पणे ।**
**प्रपदनधनास्सन्तश्शुद्धैः प्रभुंपरिभुञ्जते**
**प्रसृमरमहामोदस्मेर-प्रसूनसमैः क्रमैः ।। ३४ ।।**

प्रिया महति मुहुरामृष्टे मणिदर्पणे पश्चात्प्राप्तं स्वसमन्वितं प्रणयिनमिव प्रपदनधनाः

सन्तो महति मुहुरामृष्टे मनौ प्रभुं दृष्ट्वा प्रसृमरमहामोदस्मेरप्रसूनसमैः शुद्धैः क्रमैः परिभुञ्जत इत्यन्वयः ।।

प्रणेति । मुहुरामृष्टे मुहुर्मुहुः संस्कृते मणिमये दर्पणे पश्चात् प्राप्तं स्वसमन्वितं समवेतं प्रणयिनं प्रियं दृष्ट्वा प्रियेव मुहुरामृष्टे मुहुर्मुहुरालोचिते महति – अर्थपञ्चक-प्रतिपादिके मनौ मूलमन्त्रे पश्चात्प्राप्तं प्राधान्येन शेषतैकरूपे ज्ञाते सति तत्प्रतिसम्ब-न्धिशेषितया पश्चाज्जायमानमिवेत्यर्थः । प्रभुं श्रियःपतिं दृष्ट्वाप्रपदनदनाः प्रपत्तिमात्रधनाः । यथा दरिद्रः धनं प्राप्य तत्संरक्षणमेव करोति तथाऽनादिकर्म-वासनया पुरुषार्थबहिष्कृता जीवाः पुरुषार्थसम्पादिनीं प्रपत्तिमेव परिपालयन्तीति ध्वनिः । सन्तो मुमुक्षवः शुद्धैरुपायापायगन्धरहितैः, प्रसृमरो व्याप्तः महामोदः लोकातिशायि सौरभ्यंयेषां तानि, तानि च तानि स्मेराणि विकासीनि प्रसूनानि च तत्समैः तद्वद्भोग्यतमैर्गुणानुभवकैङ्कर्य्यरूपैः क्रमैः परि भुञ्जते अनुभवन्ति । यथा नायिका दर्पणे आत्मानं प्रियं च युगपदवलोक्य पश्चाद्भोगोपकरणैः कुसुमादिभिः प्रियमनुभवति तथा प्रपन्नोऽपि मूलमन्त्रे आत्मानं – शेषिणं चानुसन्धाय तद्गुणानुभवकैङ्कर्य्या-दिकमनुभवतीतिभावः ।। ३४ ।।

(पुरुषार्थकाष्ठाधिकारः)

एवं 'समर्थे सर्वज्ञे' इत्यारभ्य षड्भिश्श्लोकैर्भरन्यासासाधारणफलं निरूप्यानन्तरश्च-तुर्दशश्लोकैः प्रपन्ने फलत्वेनोक्तभागवतकैङ्कर्य्यं प्रथयन्निरूपयति–

**स्वतन्त्रस्वामित्वात्स्वबहुमतिपात्रेषुनियतं**
**श्रियःकान्तो देवः स खलु विनियुङ्क्ते चिदचितौ ।**
**यथा लोकाम्नायं यतिपतिमुखैराहितधियां**
**ततो नः कैङ्कर्य्यं तदभिमतपर्य्यन्तमभवत् ।। ३५ ।।**

सः श्रियःकान्तो देवः स्वतन्त्रस्वामित्वात् स्वबहुमतिपात्रेषु नियतं चिदचिदौ विनियुङ्क्ते खलु, ततः यतिपतिमुखैः यथा लोकाम्नायमाहितधियां नः कैङ्कर्य्यं तदभिमतपर्य्यन्तमभवदित्यन्वयः ।।

स्वतंत्रइति । श्रियः कान्तः सदेवः स्वामित्वात् – अप्रतिहतनियन्तृत्वात् स्वतंत्रः अकुण्ठितेच्छः चिदचितौ चेतनाचेतनौ स्वस्य बहुमतिः ''ज्ञानी त्वात्मैव

मे मतम्'' इत्यादिरूपोऽङ्गीकारस्तस्य पात्रेषु महाभागवतेषु नियतं नियमेन विशेषेण प्रेरयति खलु, स्वकैङ्कर्य्यमपि परित्यजय्य तत्कैङ्कर्य्ये नियोजयतीति भावः । खल्विति शास्त्रलोकादौ प्रसिद्धिं दर्शयति–यथा लोकाम्नायं लोकानां मध्ये यथा कश्चन यजमानस्स्वकीयं दासं स्वपुत्रादिपर्य्यन्तं विनियुङ्क्ते-इत्येवंरूपाम्नायः शास्त्रञ्च 'तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः' इत्यादि । तावुभावनतिक्रम्य यतिपतिमुखैः श्रीभाष्यकारादिभिराचार्य्यैराहिता धीः शेषत्वज्ञानं येषां तेषां नोऽस्माकं ततः – स्वतन्त्रस्वामिनियोज्यत्वाल्लोकशास्त्रानुसारेण पूर्वाचार्य्यैरुपदिष्टत्वाच्च कैङ्कर्य्यं किङ्करकृत्यं तस्य भगवतोऽभिमता भागव-तास्तत्पर्य्यन्तमभवदासीत् ।। ३५ ।।

भागवतप्रसत्तिमेव पुरुषार्थतमत्वेन प्रार्थयते–

**नाथे नस्तृणमन्यदन्यदपि वा तन्नाभिनालीकिनी**
**नालीकस्पृहणीयसौरभमुचावाचा न याचामहे ।**
**शुद्धानांतु लभेमहिस्थिरधियां शुद्धान्तसिद्धान्तिनां**
**मुक्तैश्वर्यदिनप्रभातसमयासत्तिं प्रसत्तिं मुहुः ।। ३६ ।।**

नो नाथे तन्नाभिनालीकिनीनालीकस्पृहणीयसौरभमुचा वाचा तृणमन्य-मन्यदपि वा न याचामहे, किन्तु शुद्धानां स्थिरधियां शुद्धान्तसिद्धान्तिनां मुक्तैश्वर्यदिनप्रभातसमयासत्तिं प्रसत्तिं मुहुर्लभेमहीत्यन्वयः ।।

नाथ इति । नाथे भगवति विषये नोस्माकमन्यदैश्वर्य्यं कैवल्यादिकं तृणं तृणवदुपेक्षणीयम् । अन्यदपि वा मोक्षमपि वा । तस्य भगवतो नाभिः सैव नालीकिनी सरस्तस्मिन्विद्यमानं यन्नालीकं पुण्डरीकं तेन स्पृहणीयं सौरभं मुञ्चति तया वाचा न याचामहे । किन्तु शुद्धानां चेतनोज्जीवन- तत्पराणां स्थिरधियां स्थिरबुद्धीनाम् अतएव शुद्धान्तसिद्धान्तिनांशुद्धान्तः – अन्तःपुरं लक्ष्मीरिति यावत् । तस्याः सिद्धान्तो नियमः स च पुरुषकारतया चेतनरक्षकत्वम् स एषामस्तीतितेषां शुद्धान्तसिद्धान्तिनां भागवतानां मुक्तैश्वर्य्य-दिनप्रभातसमयासत्तिं मुक्तैश्वर्य्यप्राप्तिदिनस्य यः प्रभातसमयः तस्यासत्तिः अभ्यर्णता ययातां प्रसत्तिं प्रसादमनुग्रहमिति मुहुः प्रतिपदं लभेमहि प्राप्नुयाम ।। ३६ ।।

(शास्त्रीयनियमनाधिकारः)

**मुकुन्दे निक्षिप्य स्वभरमनघो मुक्तवदसौ**
**स्वतन्त्राज्ञासिद्धां स्वयमविदितस्वामिहृदयः ।**
**परित्यागे सद्यः स्वपरविविधानर्थजननात्**
**अलङ्घ्यामामोक्षादनुसरतिशास्त्रीयसरणिम् ।। ३७ ।।**

मुकुन्दे स्वभरं निक्षिप्य अनघो मुक्तवत् स्वयमविदितस्वामिहृदयोऽसौ स्वतन्त्राज्ञासिद्धां परित्यागे सद्यः स्वपरविविधानर्थजननादामोक्षादलङ्घ्यां शास्त्रीयसरणिमनुसरतीत्यन्वयः ।।

मुकुन्द इति । मुकुन्दे स्वभरं निक्षिप्य । अत एव मुक्तवद् अनघो विनष्टपापः सन्, अविदितं स्वामिन ईश्वरस्य हृदयं येन स तथोक्तोऽसौ प्रपन्नः स्वतन्त्रस्याज्ञया श्रुतिस्मृतिरूपया सिद्धामवश्यकर्तव्याम् । किञ्च परित्यागेऽकरणे सद्यः स्वस्य परेषां शिष्यपुत्रादीनां च विविधानां लोकापवादमुखोल्लासभङ्गादिरूपेण बहुविधानामनर्थानां जननाद् अलङ्घ्याम्–अनतिक्रमणीयां शास्त्रीयां विधिचोदितां सरणिं कर्मानुष्ठानमनुसरति । भरन्यासेन विगतपापस्य लोकाऽपवादमुखोल्लासभङ्गपरिहाराय शास्त्रीयं कर्म मोक्षपर्य्यन्तं कर्त्तव्यमिति भावः ।। ३७ ।।

एतदेव विविच्य प्रकाशयति–

**श्रुतिस्मृत्याचारैः स्वमतिगतिभिश्शुद्धमनसां**
**स्वसंकल्पैर्धर्म्यैः कुलचरणदेशादिसमयैः ।**
**नियोगैर्योग्यानां नियमयितुरादेरभिमतं**
**निमित्तस्वप्नाद्यैरपि निपुणमन्विच्छति बुधः ।। ३८ ।।**

बुध आदेर्नियमयितुरभिमतं श्रुतिस्मृत्याचारैः शुद्धमनसां स्वमतिगतिभिर्धर्म्यैः स्वसङ्कल्पैः कुलचरणदेशादिसमयैः योग्यानां नियोगैर्निमित्तस्वप्नाद्यैरपि निपुणमन्विच्छतीत्यन्वयः ।।

श्रुतीति । श्रुतिस्मृत्याचारैः श्रुतिस्मृतिचोदितकर्मानुष्ठानैः स्वमतिगतिभिः

तीर्थयात्रादिगतिविशेषैश्च शुद्धमनसां निर्मलान्तःकरणानां मध्ये बुधश्शेषत्वज्ञानवान् स्वस्य सङ्कल्पैः मानसकर्मविशेषैः कुलं ब्राह्मणादि । चरणं शाखा, वह्वृचादिः । देशो आर्यावर्तद्रविडादिः । आदिशब्देन सूत्रादेस्संग्रहः । स एव समयः संकेतो येषां तैर्धर्म्यैः कार्यकर्मविशेषैः योग्यानां वाचकयुक्तिविशेषाणां नियोगैर्नियमनैः निमित्तस्वप्नः सर्वेन्द्रियोपरमरूपा सुषुप्तिस्तदाद्यैरवस्थाविशेषैश्चादेर्नियमयितुः–आदिमस्य नियन्तुः भगवतोऽभिमतं तत्कैङ्कर्य्यं - निपुणमभिमतं तदीयकैङ्कर्य्यं तदेवान्विच्छति । विहितकर्मानुष्ठानेन शुद्धान्तःकरणा एव दुर्ल्लभाः तेष्वपि तत्वज्ञानवान्दुर्ल्लभतरः तत्रापि भागवतानुवर्तनशीलो दुर्ल्लभतम इति भावः ।। ३८ ।।

**(अपराधपरिहाराधिकारः)**

**स्वच्छस्वादुसदावदातसुभगां दैवादयं देहभृत्**
**मालिन्यप्रशमाय माधवदयामन्दाकिनीं विन्दति ।**
**यद्यप्येवमसावसारविषयस्रोतःप्रसूतैः पुनः**
**पंकैरेव कलङ्कयन्निजतनुं प्राज्ञैर्न संश्लिष्यते ।। ३९ ।।**

अयं देहभृत् स्वच्छस्वादुसदावदातसुभगां माधवदयामन्दाकिनीं मालिन्यप्रशमाय दैवादेवं विन्दति यद्यपि, अथाप्यसावसारविषयस्रोतःप्रसूतैः पंकैः निजतनुं पुनः कलङ्कयन् प्राज्ञैर्न संश्लिष्यते एवेत्यन्वयः ।।

असाविति । असौ प्रपन्नः । असारा अनर्थमिश्रतया निस्सारा विषयाः शब्दस्पर्शादयः त एव स्रोतांसि प्रवाहास्तेभ्यः प्रसूतैरुत्पन्नैः पंकैः निषिद्धानुभवजनितपापैः निजां प्रपत्तिवैभवेन निवृत्तपापामात्मीयां तनुं पुनः कलङ्कयन् प्राज्ञैर्भागवतैः यद्यपि न संश्लिष्यते न सम्बध्यते तथाप्ययं देहभृन्मालिन्यप्रशमाय पापनिवृत्तये स्वच्छां भृशैश्वर्यप्रदां स्वादु अपूर्वैश्वर्य्यप्रदां सदावदातां मुक्तिप्रदां सुभगामात्मप्राप्तिप्रदां माधवदयैव मन्दाकिनी तां दैवात्प्रतिपदोक्तपुनश्शरणागति- रूपस्वाधिकारानुगुणप्रायश्चित्ताद्धेतोः विन्दति प्राप्नोति । साध्यप्रायश्चित्तं सिद्धप्रायश्चित्तस्य भगवतो दयां जनयति । पापनिवृत्तिं भगवानेव करोतीति भावः ।। ३९ ।।

अथ प्रपत्तिनाश्यानिकानिचित् पापानि, अनुभवनाश्यानिकानिचित्, प्रायश्चित्तनाश्यानि चेति विविच्य प्रकाशयति—

**प्रारब्धेतरपूर्वपापमखिलं प्रामादिकञ्चोत्तरं**
**न्यासेन क्षपयन्ननभ्युपगत-प्रारब्धखण्डञ्च नः ।**
**धीपूर्वोत्तरपाप्मनामजननाज्जातेऽपि तन्निष्कृतेः**
**कौटिल्ये सति शिक्षयाऽप्यनघयन् क्रोडीकरोति प्रभुः ।। ४०।।**

अकिलं प्रारब्धेतरपूर्वपापम् । उत्तरं प्रामादिकञ्चानभ्युपगतप्रारब्धखण्डञ्च न्यासेन क्षपयन् प्रभुः धीपूर्वोत्तरपाप्मनामजननाज्जातेऽपि तन्निष्कृतेः कौटिल्ये सति शिक्षयाऽप्यनघयन् क्रोडीकरोतीत्यन्वयः ।।

प्रारेति । प्रारब्धेतरमप्रारब्धं तादृशं पूर्वपापं जन्मान्तरानुष्ठितपापम् अखिलम् संपूर्णं, अप्रारब्धमेव तादृशं पुण्यमपि । प्रामादिकमबुद्धिपूर्वकम् । उत्तरं प्रपत्त्युत्तरकालकृतं पुण्यपापजातं न्यासेन प्रपत्त्या क्षपयन् विनाशयन् । प्रारब्धेष्वपि पुण्यपापेष्वनभ्यु-पगतप्रारब्धखण्डञ्च न्यासेन क्षपयन्प्रभुः धीपूर्वाणां बुद्धिपूर्वाणामुत्तरपाप्मनां प्रपत्त्युत्तरकालकरिष्यमाणपापानाम् । उपलक्षणमेतत्पुण्यानाञ्च । अजननाद् अनुत्पत्तेः जातेऽपि पुण्यपापजननेपि तन्निष्कृतेः तत्प्रायश्चित्तेन प्रतिपदोक्तपुनःशरणागतिरूपेण क्षपयन्, कौटिल्ये सति कुटिलबुद्ध्या प्रायश्चित्ताकरणे शिक्षया तत्फलानुभवरूपेण दण्डेनानघयन् निष्पापं कुर्वन् क्रोडीकरोति मुक्तेषु मेळयति । अप्रारब्धान्यनभ्युपगत-प्रारब्धानि प्रामादिकोत्तरपापानि च न्यासनाश्यानि, अभ्युपगतप्रारब्धान्यनुभवना-श्यानि । बुद्धिपूर्वकोत्तराणि प्रायश्चित्तनाश्यानि । कुटिलस्यानुभवनाश्यानि चेति प्रमाणस्थितिः ।। ४० ।।

**(स्थानविशेषाधिकारः)**

**यत्रैकाग्र्यं भवति भगवत्पादसेवार्चनादेः**
**यत्रैकान्त्यव्यवसितधियो यस्य कस्यापि लाभः ।**

**वासस्थानं तदिह कृतिनां भाति वैकुण्ठकल्पं**
**प्रायोदेशा मुनिभिरुदिताः प्रायिकौचित्यवन्तः ।। ४१ ।।**

भगवत्पादसेवार्चनादेः यत्रैकाग्र्यं भवति, ऐकान्त्यव्यवसितधियो यस्य कस्यापि लाभः । तत्कृतिनां वैकुण्ठकल्पं वासस्थानं भाति, मुनिभिरुदिताः प्रायो देशास्तु प्रायिकौचित्यवन्त इत्यन्वयः ।।

यत्रेति । भगवतः पादसेवार्चनं तदाराधनम् । आदिशब्देन भागवतार्चनादिकं विवक्षितम् । तादृशकैङ्कर्य्यस्य, यत्र स्थले – ऐकाग्रयं मनःसमाधानं भवति । यत्र स्थले–ऐकान्त्ये न्यासनिष्ठायां व्यवसिता धीः यस्य तस्य यस्य कस्याप्यधिकारिणो लाभो भवति । यस्य कस्यापीति वर्णाश्रमानादरोक्तिः । रहस्यत्रयार्थानुसन्धानस्य सर्वाधिकारत्वात्, वर्णाश्रमानादरोक्तिर्न विरुद्ध्यते इति द्रष्टव्यम् । तद्वासस्थानं कृतिनामिह लीलाविभूतौ वैकुण्ठकल्पमीषन्न्यूनं वैकुण्ठं भाति । ईषन्न्यूनत्वं कालपरिच्छिन्नत्वादिति भावः । भाति प्रकाशते । मुनिभिरुदिताः वासयोग्यत्वेन विहिताः प्रायोदेशा अयोध्यादयस्तु प्रायि-कौचित्यवन्तः प्रायिकं प्रचुरम् औचित्यं वासयोग्यत्वं तद्वन्तः । मुनिभिस्तु प्राचुर्य्येण तेषां वासयोग्यत्वमस्तीत्युक्तं नतु तत्रैव वस्तव्यमिति नियमः कृत इतिभावः ।। ४१ ।।

उक्तमर्थं विवृणोति–

**सा काशीति न चाकशीति भुवि साऽयोध्येति नाध्यास्यते**
**साऽवन्तीति न कल्मषादवति सा काञ्चीति नोदञ्चति ।**
**धत्ते सा मथुरेति नाग्रिमधुरं नान्यापि मान्या पुरी**
**या वैकुण्ठकथासुधारसभुजां रोचेत नो चेतसे ।। ४२ ।।**

या वैकुण्ठकथा–सुधारसभुजां चेतसे नो रोचेते सा भुवि काशीति न चाकशीति, साऽयोध्येति नाध्यास्यते, साऽवन्तीति कल्मषान्नावति, सा काञ्चीति नोदञ्चति, सा मथुरेत्यग्रिमधुरन्न धत्ते, अन्यापि सा पुरी न मान्येत्यन्वयः ।

सेति ।। या पुरी वैकुण्ठस्य कथा सैव सुधा तस्या रसः तद्भुजां तद्गुणा-स्वादरसिकानां चेतसे नोरोचेत । भुवि सा पुरी काशीति हेतोर्न चाकशीति न प्रकाशते । भुवीति पदस्य सर्वत्रानुषङ्गः । भुवि, सा पुरी अयोध्येति हेतोर्नाध्यास्यते । सा पुरि अवन्तीति हेतोः कल्मषान्नावति न रक्षति । सा पुरी काञ्चीति हेतोर्नोदञ्चति न प्रकाशते । सा पुरी मथुरेति हेतोरग्रिमधुरं पुण्यस्थलेषु प्राधान्यन्न धत्ते । अन्यापि भागवताभिमानं विना न मान्या । भागवताभिमानाभावे पुण्य-स्थलान्ययोग्यानि भागवताभिमाने सति पुण्यस्थलवदन्यानि स्थलान्यपि योग्यानीतिभावः ।। ४२ ।।

## (अथ निर्याणाधिकारः)

**मनसिकरणग्रामं प्राणे, मनः पुरुषे च तं**
**झटिति घटयन् भूतेष्वेनं परे च तमात्मनि ।**
**स्वविदविदुषोरित्थं साधारणेसरणेर्मुखे**
**नयति परतो नाडीभेदैर्यथोचितमीश्वरः ।। ४३ ।।**

ईश्वरः करणग्रामं मनसि, मनः प्राणे, तञ्च पुरुषे, एनं भूतेषु, तञ्च परे आत्मनि झटिति घटयन् इत्थं स्वविदविदुषोस्सरणेर्मुखे साधारणे सति परतो नाडीभेदैर्यथोचितं नयतीत्यन्वयः ।

मनेति । ईश्वरः सर्वनियन्ता शरीरोत्क्रमणदशायां करणानां ज्ञानकर्मेन्द्रियाणां ग्रामं समूहं मनसि घटयन् । मनश्च प्राणे घटयन् । तञ्च प्राणं पुरुषे घटयन् । एनमात्मानं पूर्वोक्तप्रकारेण भूतेषु घटयन् । तमेवात्मानं झटिति आत्मनि घटयन् । स्वमात्मानं वेत्तीति स्ववित् न जानातीत्यवित् तयोर्ज्ञान्यज्ञानिनोः सरणेर्मार्गस्य मुखे साधारण इत्थं तुल्ये सति ततः पश्चात् यथोचितं तत्तत्स्वरूपोचितं तथा भवति यथा नाडीभेदैर्नयति तत्तल्लोकान्प्रापयति । तामसानामधोनाड्योऽन्येषामूर्ध्वनाड्यः तत्रापि मुमुक्षोश्शताधिकोर्ध्वनाडी इति भावः ।। ४३ ।।

मुक्तस्यान्तिमकाले शताधिकनाडीप्रवेशं दर्शयन् दहरकुहरे कृपया तिष्ठतीत्याह—

**दहरकुहरे देवस्तिष्ठन्निषद्वरदीर्घिका**
**निपतितनिजापत्यादित्सावतीर्णपितृक्रमात् ।**
**धमनिमिह नस्तस्मिन्काले स एव शताधिकाम्**
**अकृतकपुरप्रस्थानार्थं प्रवेशयति प्रभुः ।। ४४ ।।**

निषद्वरदीर्घिकानिपतितनिजापत्यादित्सावतीर्णपितृक्रमात् दहरकुहरे तिष्ठन् प्रभुः स देवः तस्मिन् कालेऽकृतकपुरप्रस्थानार्थं शताधिकामिह धमनिं नः प्रवेशयतीत्यन्वयः ।।

देवः सर्वेश्वरः । देवशब्देन स्वयं प्रकाशत्ववाचिना दहरवासप्रयुक्तदोष-प्रत्यनीकत्वं व्यज्यते । निषद्वरदीर्घिका पङ्किलप्रसववापिका तस्यां निपतितस्य निजस्यात्मीयस्य अपत्यस्य पुत्रस्याऽऽदित्सया उद्धरणेच्छयाऽवतीर्णस्य पंके प्रविष्टस्य पितुः क्रमाद्दहरकुहरे दहरकूपे हृदयकूपे निष्ठन् स एव प्रभुः सर्वशक्तिः तस्मिन्काले चेतनोत्क्रमणकाले इह शरीरे विद्यमानान्नोऽस्मान् अकृतकपुरम् अप्राकृतस्थानं प्रति प्रस्थानार्थं शताधिकां धमनिं प्रवेशयति । मुक्तस्य शताधिकनाड्या निष्क्रमणमिति वैदिकसम्प्रदायः ।। ४४ ।।

(अथ गतिविशेषाधिकारः)

**ज्वलनदिवसज्योत्स्नापक्षोत्तरायणवत्सरान्**
**पवनतपनप्रालेयांशून् क्रमादचिरद्युतिम् ।**
**जलधरपतिं देवाधीशं प्रजापतिमागतः**
**तरति विरजां दूरे वाचस्ततः परमद्भुतम् ।। ४५ ।।**

ज्वलनप्रभृतिप्रजापत्यन्तान् क्रमादागतौ विरजां तरति ततः परं वाचो दूरेऽद्भुतमित्यन्वयः ।।

ज्वलनं, ज्वलनाधिष्ठानदेवतां, दिवसमहोधिष्ठानदेवतां, ज्योत्स्नापक्षंशुक्लप-क्षाधिष्ठानदेवताम् , उत्तरायणम् उत्तरायणाधिष्ठानदेवतां, वत्सरं, सम्वत्सराधिष्ठान-

देवतां, पवनतपनप्रालेयांशून् वायुसूर्य्यचन्द्राधिष्ठानपुरुषान्, क्रमात् पर्य्यायेण अचिरद्युतिं तडिद्देवतां जलधरपतिं वरुणं जलचरमिति वा पाठः । देवाधीशमिन्द्रं प्रजापतिं ब्रह्माणमागतः प्राप्तः तेभ्यः पूजां प्राप्त इत्यर्थः । विरजां तरति ततः परं विरजातरणानन्तरं वाचो दूरे । वर्तमानमिति शेषः । वागपरिच्छेद्यामद्भुता-माश्चर्य्यभूतां नित्यविभूतिं प्राप्नोतीति भावः ।। ४५ ।।

अथ लोकान्तरमार्गं सूचयन् तन्निवर्तके भगवति उपकारमनुसन्धत्ते—

**पितृपथघटीयन्त्रारोहावरोहपरिभ्रमै**
**र्निरयपदवीयातायातक्रमैश्च निरन्तरैः ।**
**अधिगतपरिश्रान्तीनाज्ञाधरैरतिवाह्य नः**
**सुखयति निजच्छायादायी स्वयं हरिचन्दनः ।। ४६ ।।**

हरिचन्दनः निरन्तरैः पितृपथघटीयन्त्रारोहावरोहपरिभ्रमैः निरयपदवीया-तायातक्रमैश्चाधिगतपरिश्रान्तीन् न आज्ञाधरैरतिवाह्य निजच्छायादायी स्वयं सुखयतीत्यन्वयः ।।

पित्रिति । पितृपथः पितृदेवतालोकमार्गः स एव घटीयन्त्रः तस्मिन्नारोहा वरोहरूपैः परिभ्रमैः सञ्चारैः निरन्तरैः सन्तन्यमानैः निरयपदव्यां नरकमार्गेषु यानि यातायातानि ततो जातैः क्रमैः अधिगता प्राप्ता परिश्रान्तिः परिश्रमो येषां तान्नोऽस्मान् । आज्ञाधरैः ज्वलनदिवसादिभिः । अतिवाह्य आनाय्य हरिरेव चन्दनः । अनेन सकलतापहरत्वं सूच्यते । निजच्छायादायी, सन् सुखयति आनन्दयतीत्यर्थः ।। ४६ ।।

**(परिपूर्णब्रह्मानुभवाधिकारः)**

**वितमसि पदे लक्ष्मीकान्तं विचित्रविभूतिकं**
**सचिवगमितस्सम्पद्याविर्भवत्सहजाकृतिः ।**
**स्फुटतदपृथक्सिद्धिः सिद्ध्यद्गुणाष्टकतत्फलो**
**भजति परमं साम्यं भोगे निवृत्तिकथोज्झितः ।। ४७ ।।**

विचित्रविभूतिकं लक्ष्मीकान्तं वितमसि पदे सचिवगमितः सम्पद्यातिर्भवत्-सहजाकृतिः । स्फुटतदपृथक्सिद्धिः सिद्ध्यद्गुणाष्टकतत्फलः प्रपन्नोनिवृत्ति-कथोज्झितोभोगे परमं साम्यं भजतीत्यन्वयः ।।

वितेति । सचिवेन हार्दपुरुषेण गमितो नीतः । वितमसि रजस्तमोगुणशून्ये पदे परमपदे विचित्रविभूतिकं दिव्यायुधदिव्यभूषणाद्यनेकविभूतिविशिष्टं लक्ष्मीकान्तं सम्पद्य आविर्भवन्त्यऽभिव्यक्ताः सहजाः स्वाभाविका आकृतयो ज्ञानानन्दादयो यस्य सः तथोक्तस्सन् । स्फुटा अभिव्यक्ता तेन भगवता सह अपृथक्सिद्धिः, यत्र जीवस्तत्रेश्वर इत्यविनाभावो यस्य तादृशस्सन् । सिध्यत्प्राप्तं गुणानामपहतपाप्मत्वविशोकत्व-विमृत्युत्वविजरत्वविजिधित्सत्वापिपासि तत्वसत्यकामत्वसत्यसङ्कल्पत्वनित्या-नन्दत्वानामष्टकं तत्स्वरूपानुरूपं फलं कैङ्कर्य्यं च यस्य तथा सन् । भोगे कैङ्कर्य्याख्य-सुखानुभवे निवृत्तिकथया पुनरावृत्तिप्रसङ्गेनोज्झितः त्यक्तस्सन् परमंसाम्यं भजति । निखिलहेयप्रत्यनीककल्याणैकतानत्वप्रयुक्तं भगवत्साम्यं प्राप्नो-तीत्यर्थः ।। ४७ ।।

**अविश्रान्तश्रद्धाशतकलहकल्लोलविषमा**
**ममाविर्भूयासुर्मनसि मुनिसिद्धादिसुलभाः ।**
**मधुक्षीरन्यायस्वगुणविभवासञ्जनकनन्**
**महानन्दब्रह्मानुभवपरिवाहा बहुविधाः ।। ४८ ।।**

अविश्रान्तश्रद्धाशतकलहकल्लोलविषमाः मुनिसिद्धादिसुलभाः बहुविधाः मधुक्षीरन्यायस्वगुणविभवासञ्जनकनन्महानन्दब्रह्मानुभवपरिवाहा मम मनस्या-विर्भूयासुरित्यन्वयः ।।

अवीति । अविश्रान्तानां सन्ततानामिति यावत् । श्रद्धानां कैङ्कर्य्यविश्वासानां शतैर्जाता कलहाः मुक्तानामहमहमिकया समुत्पन्नश्रद्धाविशेषाः त एव कल्लोलास्तरङ्गाः तैर्विषमाः नानाविधाः मुनिभिरुपासकैस्सिद्धैः मुक्तै आदिशब्दान्नित्यैश्च सुलभा बहुविधाः छत्रचामरादिपरिचर्यादिरूपेण बहुप्रकाराः । मधुक्षीरयोर्न्यायोयेषां ते च ते स्वगुणाश्च ।

स्वगुणशब्देन शेषशेषिणोर्गुणा उच्यन्ते । उभयगुणानुभवस्य मधुक्षीरोपमाभोग्यतमत्वनिबन्धना । स्वगुणानां विभवः तस्य सञ्जननमनुभवस्तेन कनन् प्रकाशमानः महानन्दो येषां ते च ते ब्रह्मानुभवाः त एव परिवाहाः प्रवाहाः मम मनसि आविर्भूयासुः मुक्तैः परस्परस्पर्द्धया सम्पाद्यमाना नित्यमुक्तसुलभाः छत्रचामरपादुकारो-पणादिरूपेण बहुविधाः मधुक्षीरवद्भोग्यतमशेषशेषिगुणानुभवपूर्व-कपरब्रह्मानुभवा मम भवन्त्वित्यर्थः ।। ४८ ।।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्यश्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्यकृतिषुरहस्यत्रयसार अर्थानुशासनंनाम
प्रथमोभागः समाप्तः ।।

---

**(अथ सिद्धोपायशोधनाधिकारः)**

**युगपदखिलं प्रत्यक्षेण स्वतः सततं विदन्**
**निरवधिदयादिव्योदन्वानशक्यविवर्जितः ।**
**जलधिसुतया सार्द्धंदेवो जगत्परिपालयन्**
**परमपुरुषस्सिद्धोपायः प्रदिष्टभरस्सताम् ।। ४९ ।।**

अखिलं प्रत्यक्षेण स्वतः युगपद्विदन् निरवधिदयादिव्योदन्वानशक्यविवर्जितः जलधिसुतया सार्द्धं जगत्परिपालयन् देवः परमपुरुषः सतां प्रदिष्टभरः सिद्धोपायः इत्यन्वयः ।।

युगेति । अखिलं सकलं जगत् निश्शेषं यथा भवतितथा युगपत्प्रत्यक्षेणाऽजन्यप्रत्यक्षेण विदन् जानन् । अनेन सिद्धोपायस्वरूपं सर्वज्ञाख्यधर्मेण शोधितं, योगिनां सर्वज्ञत्वे सत्यपि तत्प्रत्यक्षस्य योगाभ्यासजन्यत्वेन तद्व्युदासः । विदन्निति वर्तमाननिर्देशेन भगवज्ज्ञानस्य प्रत्यक्षरूपस्य नित्यत्वं फलितम् । निरवधेर्दयाया उदन्वान् । अनेन कारुणिकत्वमुक्तम् । असक्यविवर्जितः । अनेन सामर्थ्यमुक्तम् । जलधिसुतया सार्द्धं लक्ष्म्या सह जगत्परिपालयन् 'लक्ष्म्या सह हृषीकेश' इत्याद्यर्थोनुसन्धेयः ।

परमपुरुष इत्यनेन ब्रह्मरुद्रादिव्यावृत्तिः देव स्वयंप्रकाशः । अनेन जडादिव्यावृत्तिः । एवंविध ईश्वरः प्रदिष्टभरः स्वीकृतभरः सन् सतां प्रपन्नानामुपासकानां जलधिसुतया सार्द्धं सिद्धोपायो भवति । अनेन लक्ष्मीविशिष्टस्यैवोपायत्वमिति शिक्षितम् । जलदिसुतापदस्य पालयन्नित्यनेन सिद्धोपाय इत्यनेन चान्वयः । सर्वज्ञः कारुणिको जगद्रक्षकः लक्ष्मीविशिष्टश्च सिद्धोपाय इति निष्कर्षः ।। ४९ ।।

उक्तमेवार्थं भङ्ग्यन्तरेणाह—

**विश्राम्यद्भिरुपर्य्युपर्य्यपि दिवानक्तं बहिर्दर्शनैः**
**अस्मद्देशिकसम्प्रदाय-रहितैरद्याप्यनालक्षितः ।**
**स्वप्राप्तेः स्वयमेव साधनतया जोघुष्यमाणश्श्रुतौ**
**सत्त्वस्थेषु भजेत सन्निधिमसौ शान्तावधिश्शेवधिः ।। ५० ।।**

दिवानक्तमुपर्य्युपर्य्यपि विश्राम्यद्भिर्बहिर्दर्शनैरस्मद्देशिकसम्प्रदायरहितै-रद्याप्यनालक्षितः स्वप्राप्तेः स्वयमेव साधनतया श्रुतौ जोघुष्यमाणः शान्तावधिः शेवधिरसौ सत्त्वस्थेषु सन्निधिं भजेतेत्त्यन्वयः ।।

विश्रेति । दिवानक्तं उपर्युपरि–उत्तरोत्तरतर्के विश्राम्यद्भिः तस्थिवद्भिः बहिर्दर्शनैः बाह्यदर्शनैः अस्मद्देशिकानां नाथयामुनयतिवरादीनां सम्प्रदायेन रहितैः तत्सम्प्रदायानभिज्ञैरित्यर्थः । अद्यापि कठोरतरदुःखानुभवदशायामपि अनालक्षितः सिद्धोपायतयेत्यर्थः । स्वप्राप्तेः पुरुषार्थस्य स्वयमेव साधनतया श्रुतौ वेदान्ते जोघुष्यमाणः पुनः पुनः प्रतिपाद्यमानः शान्तः निवृत्तोऽवधिः देशकालवस्तुपरिच्छेदो यस्य सः शेवधिः आश्रितानां निक्षेपोऽसौ भगवान् सत्त्वस्थेषु सात्विकेषु सन्निधिं सिद्धोपायत्वेन सन्निधानं भजेत प्राप्नोति ।। ५० ।।

**(अथ साध्योपायशोधनाधिकारः)**

**यथाधिकरणं प्रभुर्यजनदानहोमार्चना**
**भरन्यसनभावनाप्रभृतिभिस्समाराधितः ।**
**फलं दिशति देहिनामिति हि सम्प्रदायस्थितिः**
**श्रुतिस्मृतिगुरूक्तिभिर्नयवतीभिराभाति नः ।। ५१ ।।**

प्रभुर्यथाधिकरणं यजनदानहोमार्चनाभरन्यसनभावनाप्रभृतिभिः समाराधितस्सन् देहिनां फलं दिशतीति हि सम्प्रदायस्थितिः नयवतीभिः श्रुतिस्मृतिगुरूक्तिभिः न आभातीत्यन्वयः ।।

यथेति । प्रभुः सर्वेश्वरः श्रियःपतिः यजनानि ज्योतिष्टोमादियागाः, दानं शास्त्रविहितसत्पात्रे त्यागः होमस्तु सायंप्रातरग्निकार्यादिकं अर्चना काम्या भगवत्पूजा, भरन्यसनं प्रपत्तिः, भावना उपासनम् , प्रभृतिशब्देन श्रुतिस्मृति-विहितानि कर्मान्तराण्युच्यन्ते । एतैः कर्मविशेषैः सम्यगाराधितः सम्यग्वशी-कृतस्सन् यथाधिकरणं तत्तत्फलं कामनारूपाधिकारमनतिक्रम्य देहिनामाराध-कानां फलं दिशतीति ह्यनेन प्रकारेण सम्प्रदायस्थितिः पूर्वाचार्यैः सुनिश्चितो मार्गः 'यत्फलमुद्दिश्य यत्कर्मानुष्ठीयते तेन कर्मणा वशीकृतो भगवान् तत्फलं ददाती'ति इत्येवंरूपा सम्प्रदायस्थितिः नयवतीभिः युक्तिमतीभिः श्रुतिस्मृतिगुरूक्तिभिः श्रुतिस्मृतिभिराचार्योक्तिभिश्च नोऽस्माकमाभाति, ग्राह्यतरत्वेन प्रकाशत इत्यर्थः ।। ५१ ।।

अथ चेतनेनानुष्ठीयमानं सिद्धसाधनवशीकरणसाधनमित्येतत्सर्वंसम्म-तमित्याह—

**तत्तद्वैतुकहेतुके कृतधियस्तर्केन्द्रजालक्रमे**
**बिभ्राणाः कथकप्रधानगणने निष्ठाङ्गनिष्ठाश्रयाम् ।**
**अध्यात्मश्रुतिसम्प्रदायकतकैरद्धाविशुद्धाशयाः**
**सिद्धोपायवशीक्रियामिति हि नः साध्यां समध्यापयन् ।। ५२ ।।**

तत्तद्वैतुकहेतुके तर्केन्द्रजालक्रमे कृतधियः कथकप्रधानगणने कनिष्ठाश्रयां निष्ठां बिभ्राणा अध्यात्मश्रुतिसम्प्रदायकतकैरद्धा विशुद्धाशया अस्मदाचार्य्या नः सिद्धोपायवशीक्रियामिति हि साध्यां समध्यापयन्नित्यन्वयः ।।

तत्तद्धेत्विति । तत्तद्धैतुकानां तत्तद्वादिनां हेतुके कुयुक्तिजाले कृतधियो व्यासक्तबुद्धयः तर्काः कुतर्काः प्रपत्तेः फलानुरूपत्वाभावादनुपायत्वमित्यादयः त एवेन्द्रजालानि तेषां क्रमे प्रयोगे कथकानां वादिनां मध्ये प्रधानसूतानां गणने सङ्ख्यायां कनिष्ठाङ्गुल्याश्रयां निष्ठां बिभ्राणा अग्रगण्या इत्यर्थः । अत एवाऽध्यात्मश्रुतयः 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यादयः प्रपत्त्युपायत्वप्रबोधकाः । सम्प्रदायः पूर्वाचार्यानुष्ठानं त एव कतकानि कतकं नाम पङ्किलजलनिष्पङ्का-पादको बीजविशेषः तैर्विशुद्धाशयाः निर्म्मलान्तःकरणाः सन्तः साध्यां भक्तिं प्रपत्तिश्च साक्षात् सिद्धोपायस्य भगवतः वशीक्रियां वशीकारणसाधनमिति हि खलु नोऽस्माकं समध्यापयन् सम्यग् बोधयामासुः । अद्धेत्यनेन भक्तिद्वारत्वं कर्मज्ञानयोरप्युक्तम् ।। ५२ ।।

(अथ प्रभावव्यवस्थाधिकारः)

**स्वरूपं यद्यादृग्गुणविभवलीलादि च विभोः**
**तदाज्ञासेतुश्च श्रुतिभिरवसेयं तदखिलम् ।**
**तथा तद्भक्तानां तदुपसदनादेश्च महिमा**
**यथाधीतं सद्भिर्यतिपतिमुखैरध्यवसितः ।। ५३ ।।**

विभोः स्वरूपं यद् यादृग्गुणविभवलीलादि च यश्च तदाज्ञासेतुस्तदखिलं यथा श्रुतिभिरवसेयं तथा तद्भक्तानां तदुपसदनादेर्महिमा च सद्भिर्यतिपतिमुखैर्यथाधीतमध्यवसित इत्यन्वयः ।।

स्वरूपमिति । विभोः सर्वेश्वरस्य स्वरूपंयत् यादृक्गुणविभवलीलादिच । तस्य भगवत आज्ञाविधिनिषेधरूपा सैव सेतुस्स च यादृक्, तदखिलं तत्सर्वं स्वरूपगुणवैभवादि श्रुतिभिः वेदान्तैरवसेयं व्यवस्थाप्यम् । तथेश्वररूपादिवत् तद्भक्तानामनन्तगरुड-विष्वक्सेनादीनाम् । तदुपसदनादेः तस्य भगवतः उपसदन मुपासनम् । आदिशब्देन तद्भक्तोपासनमुच्यते । तस्य च महिमा प्रभावः सद्भिः सकलप्रभावज्ञैः भगवद्भागवता-दिप्रभावज्ञैरिति यावत् । यतिपतिमुखैराचार्य्यैः यथाधीतं गुरूपदिष्टमनतिक्रम्याऽध्यवसितः व्यवस्थापितस्स एव सर्वैरप्यनुसन्धेय इतिभावः ।। ५३ ।।

अथ तत्तद्वर्णाश्रमव्यवस्थामाह—

**चातुर्वर्ण्यचतुर्विधाश्रममुरवे भेदे यथावस्थिते**
**वृत्तंतन्नियतं गुणानुगुणया वृत्त्या विशिष्टं श्रिताः ।**
**त्यागोपप्लवनित्यदूरशरणव्रज्याविधौ कोविदाः**
**चिन्तामभ्युपगन्तुमन्तिमयुगेऽप्येकान्तिनः सन्ति नः ।। ५४ ।।**

चातुर्वर्ण्यचतुर्विधाश्रममुखे भेदे यथावस्थिते सति तन्नियतं गुणानुगुणया वृत्त्या विशिष्टं वृत्तं श्रिताः त्यागोपप्लवनित्यदूरशरणव्रज्याविधौ कोविदा एकान्तिनो नश्चिन्तामभ्युपगन्तुमन्तिमयुगेऽपि सन्तीत्यन्वयः ।।

चातुर्वर्ण्येति । चतुर्णां ब्रह्मक्षत्रादीनां वर्णानां समाहारश्चातुर्वर्ण्यम् चतुर्विधाश्चाश्रमा ब्रह्मचारिगृहस्थाद्या मुखशब्देन देशकालादीनां ग्रहणं तथाविधे भेदे तथा तेन प्रकारेणावस्थिते शास्त्रे व्यवस्थापिते सति गुणानुगुणया सत्वरजस्तमोनुगुणया वृत्त्याऽनुष्ठानेन विशिष्टं तन्नियतं तत्तद्वर्णाश्रमनियतं वृत्तं कर्म श्रिताः संश्रिताः । तत्तद्वर्णाश्रमकर्मत्यागस्स एवोपप्लवस्तस्य नित्यदूरस्था शरणव्रज्या प्रपत्तिस्तस्या विधावनुष्ठाने कोविदाः समर्था एकान्तिनोऽधिगतमध्यमवृत्तयोऽन्तिमयुगे कलियुगेऽपि नोऽस्माकं चिन्तां विचारमभ्युपगन्तुमङ्गीकर्तुं सन्ति वर्तन्ते । प्रपन्ना बुद्धिमात्रत्यागेन कर्म कुर्वन्तः ईश्वरं संतोषयन्तीतिभावः ।। ५४ ।।

**(अथ प्रभावरक्षाधिकारः)**

**शिलादेस्स्त्रीत्वादिर्विपरिणतिरस्त्वद्भुतमिदं**
**ततोप्येतच्चित्रं यदुत दहनस्यैव हिमता ।**
**तृणस्यैवास्त्रत्वं रिपुषु निहतेरेव हितता**
**पदत्रेणैवेह त्रिभुवनपरित्राणमिति च ।। ५५ ।।**

इह शिलादेस्स्त्रीत्वादिर्विपरिणतिरिति यदिदमद्भुतमस्तु, दहनस्यैव हिमता यदुत एतत्ततोऽपि चित्रं, तृणस्यैवास्त्रत्वं, रिपुषु निहतेरेव हितता पदत्रेणैव

त्रिभुवनपरित्राणमित्येतत्ततोऽपि चित्रमित्यन्वयः ।।

शिलेति । शिला–शापप्राप्तशिलारूपा अहल्या । आदि शब्देन शापाद्भस्मीकृतः पुरुष उच्यते । स्त्रीत्वादिशब्देन पुरुषत्वम । विपरिणतिः परिणामः । रामप्रभावेन शिलायाः स्त्रीत्वेन परिणामः, ऋषेः प्रभावेन भस्मराशेः पुंस्त्वेन परिणाम इत्यर्थः । इदमद्भुतमस्तु । दहनस्यैव हिमतेति यत् तत्ततोऽपि चित्रम् । 'शीतो भव हनूमत' इति सीतावाक्यमाकर्ण्याग्निश्शीतोऽभूदिति यदुपायाध्यवसायमिति यावत् । तृणस्यैव ब्रह्मास्त्रत्वं, मन्त्रविश्वासप्रयुक्तमित्यर्थः । रिपुषु निहतेरेव मरणस्यैव हितता अतिशयितस्वर्गादिफलसाधनता, युद्धादिषु धर्माध्यवसायनिबन्धना । पदत्रेणैव पादुकयैव त्रिभुवनपरित्राणमिति च त्रिभुवनसंरक्षणमिति च भरतस्य । स्वोपायाध्यवसायनिबन्धनोपायः सर्वोऽपि विश्वासं विना न फलतीति श्लोकार्थः ।। ५५ ।।

अथ प्रपत्त्यध्यवसायं निरूपयति—

**रागद्वेषमदादिकैरिह महारक्षोभिरक्षोभिते**
**नित्ये रक्षितरि स्थिते निजभरन्यासाभिधानं तपः ।**
**यत्कक्षीकृतमत्यशेत विविधान्धर्मानधर्मद्रुहः**
**तद्भूमार्णवलेशवर्णनमपि प्राचां न वाचां पदम् ।। ५६ ।।**

इह रागद्वेषमदादिकैर्महारक्षोभिरक्षोभिते नित्ये स्थिते रक्षितरि, कक्षीकृतं निजभरन्यासाभिधानं यत्तपोऽधर्मद्रुहो विविधान् धर्मान् अत्यशेत तद्भूमार्ण-वलेशवर्णनमपि प्राचां वाचां न पदमित्यन्वयः ।

रागेति । रागद्वेषमदादिकैर्महारक्षोभिरक्षोभिते नित्ये निरुपाधिके रक्षितरि रक्षके भगवति स्थिते रक्षिष्यामीति जागरूके कक्षीकृतंसाङ्गमनुष्ठितं निजभरन्यासाभिधानम् आत्मात्मीयभरन्यासाख्यं यत्तपः अधर्मद्रुहः पापनिवर्त्त-कान्विविधान् धर्मान् अत्यशेत अत्यक्रामत्, तस्य न्यासाख्यतपसः भूमा प्रभावः स एवार्णवस्तस्य लेशो बिन्दुस्तस्य वर्णनं प्राचां पुरातनानां वैदिकानामिति यावत् । वाचां पदं परिच्छेद्यं न भवतीति यावत् ।। ५६ ।।

(अथ मूलमन्त्राधिकारः)

**तारं पूर्वं तदनु हृदयं तच्च नारायणायेति**
**आम्नायोक्तं पदमवयतां सार्थमाचार्यदत्तम् ।**
**अङ्गीकुर्वन्नलसमनसामात्मरक्षाभरन्नः**
**क्षिप्रं देवः क्षिपति निखिलान् किङ्करैश्वर्यविघ्नान् ।। ५७ ।।**

तारं पूर्वं तदनु हृदयं तच्च नारायणायेत्याम्नायोक्तं सार्थमाचार्यदत्तं पदमवयतामलसमनसां न आत्मरक्षाभरमङ्गीकुर्वन् देवो किङ्करैश्वर्यविघ्नान् क्षिप्रं क्षिपतीत्यन्वयः ।।

तारमिति । आचार्यदत्तं सदाचार्य्योपदिष्टं पूर्वं मन्त्रस्य प्रथमपदभूतं तारयतीति तारं संसारोत्तारकं प्रणवं, तदनु ततः पश्चादाचार्य्योपदिष्टं हृदयं मन्त्रस्य मध्यपदभूतन्नमः पदं, 'मन्त्रस्य हृदयन्नम' इत्यभियुक्तोक्तेः । आम्नायोक्तं वेदान्तप्रतिपादितं तन्नारायणायेति पदश्च, सार्थमर्थेन सहावयतामनुसन्दधताम् अलसमनसां मन्दबुद्धीनाम् । इदमशक्तेरप्युपलक्षणम् । अनेनोपासकापेक्षया प्रपन्नस्य विलक्षणाधिकारः सूचितः । नोऽस्माकमात्मरक्षाभरमङ्गीकुर्वन् देवः निखिलान् किङ्करैश्वर्य्यविघ्नान् कैङ्कर्य्याख्यपुरुषार्थप्रतिबन्धकदुरितानि क्षिप्रं शीघ्रं क्षिपति । क्षिप्रमित्यनेन, निखिलानित्यनेन च विलम्बितफलभाजामभ्युपगतप्रारब्ध-भाजामुपासकानां व्यावृत्तिः ।। ५७ ।।

अनन्तरं पदवर्णसङ्ख्यानिरूपणमुखेन तत्प्रतिपाद्यमर्थमाह—

**इत्थं सङ्घटितः पदैस्त्रिभिरसावेकद्विपश्चाक्षरैः**
**अर्थैस्तत्त्वहितप्रयोजनमयैरध्यात्मसारैस्त्रिभिः ।**
**आद्यत्र्यक्षरवेदसूतिरजहत्स्थूलादिवृत्तित्रयः**
**त्रैगुण्यप्रशमं प्रयच्छति सतां त्रय्यन्तसारो मनुः ।। ५८ ।।**

एकद्विपश्चाक्षरैस्त्रिभिः पदैरत्थं सङ्घटितः तत्त्वहितपुरुषार्थप्रयोजनमयैस्त्रिभिरध्यात्मसारैरर्थैः सङ्घटित आद्य त्र्यक्षरवेदसूतिरजहत्स्थूलादिवृत्तित्रयस्त्रय्यन्त- सारोऽसौ मनुः सतां त्रैगुण्यप्रशमं प्रयच्छतीत्यन्वयः ।।

इत्थमिति । पूर्वोक्तक्रमेण त्रिभिः पदैः प्रणवपदनमःपदनारायणपदैः सङ्घटितः । एकद्विपञ्चाक्षरैः सङ्घटितोऽध्यात्मसारैः सकलवेदान्तसारभूतैः स्वरूपोपायपुरुषार्थरूपैः त्रिभिरर्थैश्च सङ्घटितः मन्त्रस्थैस्त्रिभिरपि पदैः स्थूलादिवृत्त्या क्रमेण स्वरूपोपायपुरुषार्थाः प्रतिपाद्यन्त इति सम्प्रदायः । आद्यः प्रथमपदभूतोऽक्षरः– अकारोकारमकाररूपेण वर्णत्रयात्मको वेदसूतिः प्रणवो यस्मिन् सः । अजहदत्यक्तं स्थूलादिवृत्तीनां त्रयं यस्य सः । आदिशब्देन सूक्ष्ममध्यमवृत्त्योर्ग्रहणम् । स्थूला रूढिः । सूक्ष्मा योगः । मध्यमा योगरूढिः । अकारादौ स्थूलवृत्त्येश्वरादिस्वरूपबोधनं योगेन रक्षकत्वादीनामिति विवेकः । त्रय्यन्तसारो वेदान्तसारः–असौ मनुः मूलमन्त्रः सतां स्वस्मिन् विश्वासवतां त्रैगुण्यप्रशमं प्रशमनं संसारनिवृत्तिं प्रयच्छति प्रकर्षेण ददातीत्यर्थः ।। ५८ ।।

**(अथ द्वयाधिकारः)**

**आकर्णितो वितनुते कृतकृत्यकक्ष्याम्**
**अम्रेडितो दिशति यश्च कृतार्थभावम् ।**
**प्रत्यूषतां भजति संसृतिकालरात्रेः**
**पद्मासहायशरणागतिमन्त्र एषः ।। ५९ ।।**

य एव पद्मासहायशरणागतिमन्त्र आकर्णितस्सन् कृतकृत्यकक्ष्यां वितनुते आम्रेडितश्च कृतार्थभावं दिशति, संसृतिकालरात्रेः प्रत्यूषताञ्च भजतीत्यन्वयः ।।

आकर्णीति । यो मन्त्र आम्रेडितः–अर्थज्ञानपर्य्यन्तानुसंहितस्सन् कृतार्थभावमधिगतपुरुषार्थत्वं दिशति । एषः पद्मासहायस्य श्रीपतेर्विषये क्रियमाणा या शरणागतिः प्रपत्तिस्तदनुष्ठानमन्त्रो द्वयं संसृतिकालरात्रेः संसारमृत्युप्राप्तिनिशायाः प्रत्यूषतां प्रभातसमयत्वं भजति ।। ५९ ।।

अमुमेवार्थमपेक्षितार्थान्तरनिरूपणमुखेनाह—

**न वेदान्ताच्छास्त्रं न मधुमथनात्तत्त्वमधिकं**
**न तद्भक्तात्तीर्थं न तदभिमतात्सात्त्विकपदम् ।**

न सत्त्वादारोग्यं न बुधभजनाद्बोधजनकं
न मुक्तेः सौख्यं न द्वयवचनतः क्षेमकरणम् ।। ६० ।।

अन्वयस्तु सुगमः

न वेदेति ।। वेदान्तादधिकं प्रवचनयोग्यं शास्त्रं नास्ति । तत्प्रतिपाद्येषु तत्त्वेषु मधुमथनात् केशवाद् अधिकं सात्विकं पदं सत्वोद्रेकहेतुः स्थलं नास्ति । सत्वात् शुद्धसत्त्वात् अधिकमारोग्यं रोगोपशमनं नास्ति । बुधभजनाद्भागवतानुवर्त्तनाद् अधिकं बोधजनकं ज्ञानोत्पादकं नास्ति । मुक्तेरधिकं सौख्यं नास्ति । द्वयवचनतः द्वयानुसन्धानाद् अधिकं क्षेमकरणं स्वदार्ढ्यापादकं नास्ति न विद्यत इति यावन् ।। ६० ।।

(अथ चरमश्लोकाधिकारः)

दुर्विज्ञानैर्नियमगहनैर्दूरविश्रान्तिदेशै-
र्बालानर्हैर्बहुभिरयनैश्शोचतां नः सुपन्थाः ।
निष्प्रत्यूहं निजपदमसौ नेतुकामस्स्वभूम्ना
सत्पाथेयं किमपि विदधे सारथिः सर्वनेता ।। ६१ ।।

शोचतां न इत्यन्तं यथापाठ एवान्वयः, सुपन्थाः स्वभूम्ना निष्प्रत्यूहं निजपदं नेतुकामः सर्वनेताऽसौ सारथिः किमपि सत्पाथेयंविदध इति शेषस्यान्वयः ।।

दुर्वीति ।। दुर्विज्ञानैर्दुःखेनापि ज्ञातुमशक्यैरनेनोपासनेज्ञानमधिकार इति सूचितम् । नियमेन नियमाख्येनाऽङ्गेन । इदन्तु यमाद्यङ्गान्तरस्याप्युपलक्षणम् । एतैरङ्गैः गहनैरनुष्ठातुमशक्यैः । अनेन शक्तिरप्यधिकार इति सूचितम् । दूरो विलम्बितो विश्रान्तिदेशो मोक्षो येषां तैः विलम्बेन मुक्तिप्रदैरित्यर्थः । अनेन विलम्बक्षमत्वमधिकार इति सूचितम् । बालानां बालशब्दोपलक्षितस्त्रीशूद्रादीनाम-नर्हैरविहितैरनेनापर्य्यु-दासोप्यधिकार इति ......................................................

...............................................................................

यो निरवधिदयादिव्योदन्वत्तरङ्गनिरंकुशैर्गुणसंक्रमै; शिष्यान्नियमति, अचरमगुरोराज्ञापारम्परीपरवानसाविह तान् परन्न रक्षति किन्तु तल्लक्ष्मेण स्वमप्यभिरक्षतीत्यन्वयः ।

निरवधीति ।। निरवधिदया – उत्कूलभगवद्दया सैवोदन्वान् तस्य तरङ्गवन्निरंकुशैरप्रतिहतैर्गुणानामात्मगुणानां शेषत्वपारतन्त्र्यादीनां संक्रमो येषु तैश्शिक्षाक्रमैर्य आचार्यः शिष्यान्नियमयति प्रवर्तयति । अचरमगुरोः प्रथमगुरोर्भगवत आज्ञारूपश्रुतिस्मृतिसमूहस्य परवान् परतन्त्रोऽसावाचार्य इह लीलाविभूतौ तान्पुनः शिष्यानेव नाभिरक्षति किन्तु तल्लक्ष्मेण शिष्यशिक्षाव्याजेन स्वमप्यात्मानमप्यभिरक्षति ।। ६४ ।।

## (अथ शिष्यकृत्याधिकारः)

**अशिथिलगुरुभक्तिस्तत्प्रशंसादिशीलः**
**प्रचुरबहुमतिस्तद्वस्तुवास्त्वादिकेऽपि ।**
**गुणवति विनियोक्तुं गोपयन् सम्प्रदायं**
**कृतविदनघवृत्तिः किन्न विन्देन्निधानम् ।। ६५ ।।**

अशिथिलगुरुभक्तिस्तत्प्रशंसादिशीलः तद्वस्तुवास्त्वादिकेऽपि प्रचुरबहुमतिः गुणवति विनियोक्तुं सम्प्रदायं गोपयन् कृतविदनघवृत्तिः प्रपन्नो किंवा निधानं न विन्देदित्यन्वयः ।।

अशिथीति ।। अशिथिलगुरुभक्तिस्सन्ततप्रवृद्धगुरुभक्तिः । तस्य गुरोः प्रशंसा आत्मगुणप्रकाशनम् । आदिशब्देन तत्कैङ्कर्य्यमुच्यते । तदेव शीलं यस्य सः । तस्याचार्यस्य वस्तु वसनाभरणादिरूपं, वास्तु ग्रहं तदादिके वस्तुनि प्रचुरबहुमतिरतिशयितविश्वासः । गुणवति गुणाढ्ये शिष्ये विनियोगं कर्त्तुं संप्रदायं गोपयन् रक्षयन् । कृतविद् आचार्यकृतोपकारज्ञः । अनघा निष्पापा वृत्तिर्व्यापारो यस्त

सः । किम्वा निधानं न विन्देन्न प्राप्नुयात् । भगवद्भागवताचार्यमुखोल्लासरूपं फलं प्राप्नोतीत्यर्थः ।। ६५ ।।

अथ शिष्येणाचार्य्यो देवतात्वेन पूज्य इत्याह—

**अध्यासीनतुरङ्गवक्त्रविलसज्जिह्वाग्रसिंहासनात्**
**आचार्य्यादिह देवतां समधिकामन्यान्न मन्यामहे ।**
**यस्यासौ भजते कदाचिदजहद्भूमा स्वयं भूमिकां**
**मग्नानां भविनां भवार्णवसमुत्ताराय नारायणः ।। ६६ ।।**

इह अध्यासीनतुरङ्गवक्त्रविलसज्जिह्वाग्रसिंहासनादाचार्य्यादन्यां देवतां समधिकां न मन्यामहे । यस्य भूमिकामसौ नारायणो मग्नानां भविनां भवार्णव-समुत्ताराय स्वयमजहद्भूमा सन् कदाचिद्भजत इत्यन्वयः ।।

अध्येति ।। अध्यासीनेन नित्यवासिना तुरङ्गवक्त्रेण विलसत्प्रकाशमानं जिह्वाग्रमेव सिंहासनं यस्य तस्मादाचार्य्यात् । समधिकाम् अन्यां देवतां न मन्यामहे । असौ नारायणः स्वयमजहद्भूमा अत्यक्तवैभवस्सन् मग्नानाम् अनादिकर्मनिमग्नानाम्, अत एव भविनां संसारिणां भवार्णवात्संसारसमुद्रादुत्ताराय आचार्य्यस्य भूमिकां वेषं कदाचिच्चेतनसुकृतपरिपाकदशायां भजते । अत्र ''साक्षान्नारायणो देवः'' 'आचार्य्यः स हरिः साक्षात्' इत्यादिप्रमाणान्यनु-सन्धेयानि ।। ६६ ।।

**(निगमनाधिकारः)**

**करबदरितविश्वः कश्चिदाचार्य्यदृष्ट्या**
**मुषितनिखिलमोहो मूलमन्त्रादिभोगः ।**
**सगुणविषयसिद्धौसम्प्रदायं प्रयच्छन्**
**सुचरितसिलहारी सूरिवृन्दाभिनन्द्यः ।। ६७ ।।**

आचार्य्यदृष्ट्या मुषितनिखिलमोहो करबदरितविश्वो मूलमन्त्रादिभोगः

सगुणविषयसिद्धौ सम्प्रदायं प्रयच्छन् सुचरितसिलहारी कश्चित्सूरिवृन्दाभिनन्द्य इत्यन्वयः ।।

करेति ।। आचार्य्यदृष्ट्याऽऽचार्य्यकटाक्षेण निराकृतः निखिलमोहो यस्य सः । करेबदरितं बदरफलवद्विशदीकृतं विश्वं यस्य सः । मूलमन्त्र आदिर्ययोर्द्वयचरमश्लोकयोस्तदर्थानुभवभोगो यस्य सः । सगुणस्याऽऽत्मगुणोपेतस्य विषयस्य शिष्यस्य सिद्धौ सत्यां सम्प्रदायं प्रयच्छन् । सुचरितं समाश्रयणोत्तरकालीनवृत्तिः सैव सिलम् अयाचितोपनतं तद्दृहरतीति शिलहारी । अनेन शिलहारिवृत्तिश्च सूचिता । तादृशः कश्चिदस्ति चेत् स सूरिवृन्दैरभिनन्द्यो भवति ।। ६७ ।।

**निर्विष्टं यतिसार्वभौमवचसामावृत्तिभिर्य्यौवनं**
**निर्धूतेतरपारतन्त्र्यनिरया नीताः सुखं वासराः ।**
**अङ्गीकृत्य सतां प्रसत्तिमसतां गर्वोपि निर्वापितः**
**शेषायुष्यपि शेषिदम्पतिदयादीक्षामुदीक्षामहे ।। ६८ ।।**

अस्माभिर्यतिसार्वभौमवचसामावृत्तिभिर्य्यौवनं निर्विष्टम् अत एव निर्धूतेतरपारतन्त्र्यनिरया वासराः सुखं नीताः, सतां प्रसत्तिमङ्गीकृत्य असतां गर्वोऽपि निर्वापितः एवञ्च शेषायुष्यपि शेषिदम्पतिदयादीक्षामुदीक्षामह इत्यन्वयः ।।

निर्वीति ।। यतिसार्वभौमवचसां यतिराजवचसामावृत्तिभिर्यौवनं निर्विष्टं गतं नतु विषयान्तरैः । वासरा निर्धूतो निराकृत इतरपारतन्त्र्यमेव निरयो नरकविशेषो येषान्ते तथा सन्तस्सुखं नीताः । सतां नाथयामुनमुनिप्रभृतीनां प्रसत्तिमनुग्रहमङ्गीकृत्य शिरसोदूह्य बाह्यकुदृष्टीनां गर्वोऽपि निर्वापितः । शेषायुष्यपि परिशिष्टे आयुष्याजीवनमिति यावत् । शेषिणोरुभयविभूतिशेषिणोः दम्पत्योः श्रीश्रीनिवासयोर्दयादीक्षां दयया कृतां मोक्षयिष्यामीति सङ्कल्परूपां दीक्षामुदीक्षामहे प्रेक्षमाणा भवामः ।। ६८ ।।

अथ स्वकीयग्रन्थस्य सात्विकेषूपयोगं दर्शयति—

**स्तोतुं निन्दितुमस्मदुक्तिमथवा सोढुं समूढं जगत्**
**किन्नश्छिन्नमनन्त-चिन्तनरसे सुस्थे परं तस्थुषाम् ।**
**शिष्याः शिक्षितबुद्धयश्श्रुतिपथे येषां वयं ये चनः**
**तत्सन्तोषसमर्पणक्षममिदं साडम्बरैः किम्परैः ।। ६९ ।।**

जगदस्मदुक्तिं स्तोतुमथवा निन्दितुं सोढुम् समूढं सुस्थेऽनन्तचिन्तनरसे परं तस्थुषां नः किं छिन्नम् , श्रुतिपथे शिक्षितबुद्धयोवयं येषां शिष्याः ये च नः । इदं तत्सन्तोषसमर्पणे क्षमम् , साडम्बरैः परैः किमित्यन्वयः ।।

स्तोतुमिति ।। जगदस्मदुक्तिं स्तोतुं निन्दितुं सोढुमुपेक्षितुं समूढमसमर्थं सामर्थ्यरहितं भवति, सुस्थे सुस्थिरे केनाप्यप्रकम्प्ये अनन्तस्य ब्रह्मणश्चिन्तनं विचारस्तदात्मके रसे भोग्यवस्तुनि परं तस्थुषां नियमेन तिष्ठतां नः तावता किं छिन्नम् । श्रुतिपथे वेदमार्गे शिक्षितबुद्धयो वयं येषां शिष्या ये च नश्शिष्याः । इदमस्मदुक्तं तेषां सन्तोषसमर्पणे क्षमं भविष्यति । साडम्बरैः कुतर्कवादिभिः परैः किम्प्रयोजनमिति यावत् ।। ६९ ।।

उक्तमेवार्थं विविच्य दर्शयति—

**आस्तिक्यवान्निशितबुद्धिरनभ्यसूयुः**
**सत्सम्प्रदायपरिशुद्धमनास्सदर्थः ।**
**सङ्केतभीतिरहितस्सतृणेष्वसक्तः**
**सद्वर्त्तनीमनुविधास्यति शाश्वतीं नः ।। ७० ।।**

एवम्भूतः पुरुषः शाश्वतीन्नः सद्वर्त्तनीमनुविधास्यतीत्यन्वयः ।।

आस्तीति ।। आस्तिक्यवान् - शास्त्रविश्वासशाली निशितबुद्धिः श्रुतार्थ-धारणशक्तोऽनभ्यसूयुः गुणदोषाविष्करणरहितः सतां श्रुतिस्मृत्यविरोधिनां सम्प्रदायेन

परिशुद्धमनाः निःसंशयहृदयस्सदर्थो सद्भ्योऽर्थविशेषं जिज्ञासुः सङ्केतभीत्या रहितस्तृणेषु निस्सारग्रन्थेष्वसक्तः पुरुषः यः सनः शाश्वतीमविच्छिन्नसम्प्रदायां सद्वर्त्तनीं सन्मार्गमनुविधास्यतीति सर्वं समञ्जसम् ।। ७० ।।

---

रहस्यत्रयसारोऽयं वेङ्कटेशविपश्चिता ।
शरण्यदम्पतिविदां सम्मतः समगृह्यत ।।

इति श्रीवेदान्ताचार्यकृतिष्वधिकारसंग्रहः ।।
ओं नमः श्रीबालमुकुन्दभगवत्पादेभ्यः ।।

## श्रीरस्तु

ओं शान्तिः । शान्तिः । शान्तिः ।।

---

श्री:

श्रीमते निगमान्तमहादेशिकाय नम: ।।

# ஸ்ரீமத் ரஹஸ்யத்ரய ஸாரம்

## அதிகாரங்களின் கடைசிப் பாசுரங்கள்

(பாசுரம் 1-முதல் 56-வரை)

### குரு பரம்பராஸாரம்

பொய்கைமுனி பூதத்தார் பேயாழ்வார்தண்
 பொருநல்வருங் குருகேசன் விட்டுசித்தன்
துய்யகுலசேகரன் நம் பாணநாதன்
 தொண்டரடிப்பொடி மழிசைவந்த சோதி
வையமெலாம் மறைவிளங்க வாள்வேலேந்தும்
 மங்கையர்கோ னென்றிவர்கள் மகிழ்ந்து பாடும்
செய்யதமிழ் மாலைகள் நாம் தெளிய வோதித்
 தெளியாத மறைநிலங்கள் தெளிகின்ரேமே. 1

இன்பத்தி லிறைஞ்சுதலி லிசையும் பேற்றில்
 இகழாத பல்லுறவி லிராகம் மாற்றில்
தன்பற்றில் வினைவிலக்கில் தகவோக்கத்தில்
 தத்துவத்தை யுணர்த்துதலில் தன்மை யாக்கில்
அன்பர்க்கே யவதரிக்கு மாயன்நிற்க
 அருமறைகள் தமிழ்செய்தான் தாளே கொண்டு
துன்பற்ற மதுரகவி தோன்றக் காட்டும்
 தொல்வழியே நல்வழிகள் துணிவார்கட்கே. 2

என்னுயிர்தந் தளித்தவரைச் சரணம் புக்கி
 யானடைவே யவர்குருக்கள் நிரைவணங்கிப்
பின்னருளாற் பெரும்பூதூர் வந்த வள்ளல்
 பெரியநம்பி யாளவந்தார் மணக்கால் நம்பி
நன்னெறியை யவர்க்குரைத்த உய்யக்கொண்டார்
 நாதமுனி சடகோபன் சேனைநாதன்
இன்னமுதத் திருமகளென் றிவரை முன்னிட்
 டெம்பெருமான் திருவடிக ளடைகின்றேனே. 3

ஆரண நூல்வழிச் செவ்வை யழித்திடு மைதுகர்க்கோர்
வாரணமாயவர் வாதக் கதலி கள் மாய்த்தபிரான்
ஏரணி கீர்த்தி யிராமானுசமுனி யின்னுரைசேர்
சீரணி சிந்தையிஞேஞ்சிந்தியோமினித் தீவினையே. 4

நீளவந்தின்று விதிவகையால் நினைவொன்றிய நாம்
மீளவந்தின்னும் வினையுடம்பொன்றி விழுந்துழலாது
ஆளவந்தாரெனவென்றருள் தந்து விளங்கிய சீர்
ஆளவந்தாரடியோம் படியோமினியல்வழக்கே. 5

காளம் வலம்புரி யன்னநற்கா தலடியவர்க்குத்
தாளம் வழங்கித் தமிழ்மறை யின்னிசைதந்தவள்ளல்
மூளுந்தவநெறிமூட்டிய நாதமுனிகழலே
நாளுந்தொழுதெழுவோம் நமக்கார் நிகர் நானிலத்தே. 6

## உபோத்காதாதிகாரம்

ஆளுமடைக்கலமென் றெமையம்புயத்தாள் கணவன்
தாளிணைசேர்ந்தெமக்குமவைதந்த தகவுடையார்
மூளுமிருட்கள் விள முயன்றோதிய மூன்றினுள்ளம்
நாளுமுகக்கவிங்கே நமக்கோர்விதி வாய்க்கின்றதே. 7

திருவுடன் வந்த செழுமணிபோல் திருமாலிதயம்
மருவிடமென்ன மலரடிசூடும் வகைபெறுநாம்
கருவுடன்வந்த கடுவினையாற்றில் விழுந்தொழுகாது
அருவுடனைந்தறிவா ரருள்செய்ய வமைந்தனரே. 8

## ஸாரநிஷ்கர்ஷாதிகாரம்

அமையாவிவையெனு மாசையினுலறுமூன்றுலகிற்
சுமையான கல்விகள் சூழவந்தாலுந்தொகையிவையென்று
இமையாவிமையவரேத்திய வெட்டிரண்டெண்ணிய நம்
சமயாசிரியர் சதிர்க்குந்தனிநிலை தந்தனரே. 9

## ப்ரதாநப்ரதிதந்த்ராதிகாரம்

நிலைதந்த தாரகனாய் நியமிக்குமிறைவனுமாய்
இலதொன்றெனாவகையெல்லாந்தனதெனுமெந்தையுமாய்த்
துலையொன்றிலையென நின்ற துழாய் முடியானுடம்பாய்
விலையின்றி நாமடியோமெனும் வேதியர் மெய்ப்பொருளே. 10

## அர்த்தபஞ்சகாதிகாரம்

பொருளொன்றென நின்ற பூமகள் நாதனவனடி சேர்ந்து
அருளொன்றுமன்பனவன் கொளுபாயமமைந்த பயன்
மருளொன்றிய வினைவல்விலங்கென்றிவையைந்தறிவார்
இருளொன்றிலாவகை யெம்மனந்தேறவியம்பினரே. 11

### தத்துவத்ரயசிந்தநாதிகாரம்

புருடன் மணிவரமாகப் பொன்ருமூலப்
பிரகிருதிமறுவாக மான்றண்டாகத்
தெருள்மருள்வாள்மறைவாக வாங்காரங்கள்
சார்ங்கஞ்சங்காக மனந்திகிரியாக
இருடிகங்களீரைந்துஞ் சரங்களாக
இருபூதமாலை வனமாலையாக
கருடனுருவாமறையின் பொருளாங் கண்ணன்
கரிகிரிமேல் நின்றனைத்துங் காக்கின்ருனே. 12

தேறவியம்பினர் சித்துமசித்துமிறையுமென
வேறுபடும் வியன்றத்துவமூன்றும் வினையுடம்பில்
கூறுபடுங் கொடுமோகமுந் தானிறையாங்குறிப்பும்
மாற நினைந்தருளால் மறைநூல்தந்த வாதியரே. 13

### பரதேவதாபாரமார்த்யாதிகாரம்

வாதியர்மன்னுந் தருக்கச்செருக்கின் மறைகுலையச்
சாதுசனங்களடங்க நடுங்கத் தனித்தனியே
ஆதியெனுவகை யாரணதேசிகர் சாற்றினர் நம்
போதமருந் திருமாதுடனின்ற புராணனையே. 14

### முமுக்ஷுத்வாதிகாரம்

நின்றபுராணனடியிணை யேந்து நெடும்பயனும்
பொன்றுதலே நிலையென்றிடப் பொங்கும் பவக்கடலும்
நன்றிது தீயதிதென்று நவின்றவர் நல்லருளால்
வென்று புலன்களை வீடினை வேண்டும் பெரும்பயனே. 15

### அதிகாரிவிபாகாதிகாரம்

வேண்டும் பெரும்பயன் வீடென்றறிந்து விதிவகையால்
நீண்டுங்குறுகியுநிற்கு நிலைகளுக்கேற்குமன்பர்
மூண்டொன்றில் மூலவினைமாற்றுதலின் முகுந்தனடி
பூண்டன்றி மற்ருேர்புகலொன்றிலையென நின்றனரே. 16

### உபாயவிபாகாதிகாரம்

நின்றநிலைக்குறநிற்குங் கருமமும்நேர்மதியால்
நன்றென நாடிய ஞானமுநல்குமுட்கண்ணுடையார்
ஒன்றியபத்தியுமொன்றுமிலாவிரைவார்க்கருளால்
அன்று பயன்றருமாறுமறிந்தவரந்தணரே. 17

ப்ரபத்தியோக்யாதிகாரம்

அந்தணரந்தியரெல்லையினின்றவனைத்துலகம்
நொந்தவரே முதலாக நுடங்கியனன்னியராய்
வந்தடையும் வகை வன்தகவேந்தி வருத்திய நம்
அந்தமிலாதியை யன்பரறிந்தறிவித்தனரே. 18

பரிகரவிபாகாரதிகாரம்

அறிவித்தனரன்பரையம்பறையுமுபாயமில்லாத்
துறவித்துனியிற்றுணையாம் பரனை வரிக்கும்வகை
உறவித்தனையின்றியொத்தாரென நின்ற வும்பரை நாம்
பிறவித்துயர் செகுப்பீரென்றிரக்கும் பிழையறவே. 19

ஸாங்கப்ரபதநாதிகாரம்

அறவே பரமென்றடைக்கலம் வைத்தனரன்று நம்மைப்
பெறவே கருதிப் பெருந்தகவுற்ற பிரானடிக்கீழ்
உறவேயிவனுயிர்காக்கின்ற வோருயிருண்மையை நீ
மறவேலென நம்மறைமுடிசூடிய மன்னவரே. 20

க்ருதக்ருத்யாதிகாரம்

மன்னவர் விண்ணவர் வானேரிறையொன்றும் வான்கருத்தோர்
அன்னவர் வேள்வி யனைத்து முடித்தன ரன்புடையார்க்கு
என்னவரந்தரவென்ற நம்மத்திகிரித்திருமால்
முன்னம் வருத்தி யடைக்கலங்கொண்ட நம்முக்கியரே. 21

ஸ்வநிஷ்டாபிஜ்ஞாநாதிகாரம்

முக்கியமந்திரங்காட்டிய மூன்றினிலையுடையார்
தக்கவையன்றித் தகாதவையொன்றுந் தமக்கிசையார்
இக்கருமங்களெமக்குளவென்னுமிலக்கணத்தால்
மிக்கவுணர்த்தியர் மேதினிமேவிய விண்ணவரே. 22

உத்தரக்ருத்யாதிகாரம்

விண்ணவர் வேண்டி விலக்கின்றி மேவுமடிமையெல்லாம்
மண்ணுலகத்தில் மகிழ்ந் தடைகின்றனர் வண்டுவரைக்
கண்ணனடைக்கலங்கொள்ள கடன்கள் கழற்றிய நம்
பண்ணமருந்தமிழ்வேதமறிந்த பகவர்களே. 23

புருஷார்த்தகாஷ்டாதிகாரம்

வேதமறிந்த பகவர் வியக்க விளங்கிய சீர்
நாதன் வகுத்த வகை பெறுநாமவனல்லடியார்க்கு

ஆதரமிக்க வடிமை யிசைந்தழியாமறைநூல்
நீதி நிறுத்த நிலைகுலையாவகை நின்றனமே. 24

சாஸ்த்ரீயநியமநாதிகாரம்

நின்றன மன்புடைவானோர் நிலையில் நிலமளந்தான்
நன்றிது தீயதிதென்று நடத்திய நான்மறையால்
இன்று நமக்கிரவாதலி லிம்மதி யின்னிலவே
அன்றி யடிக்கடி யாரிருள்தீர்க்க வடியுளதே. 25

அபராதபரிஹாராதிகாரம்

உளதான வல்வினைக்குள்ளம் வெருவி யுலகளந்த
வளர்தாமரையிணை வன்சரணுக வரித்தவர் தாம்
களைதானென வெழுங் கன்மந் துறப்பர் துறந்திடிலும்
இளைதா நிலை செக வெங்கள்பிரானருள்தேனெழுமே. 26

ஸ்தாநவிசேஷாதிகாரம்

ஆராதவருளமுதம் பொதிந்த கோயில்
அம்புயத்தோ னயோத்திமன்னற் களித்தகோயில்
தோலாத தனிவீரன் ரெழுதகோயில்
துணையான வீடணற்குத் துணையாங்கோயில்
சேராத பயனெல்லாஞ் சேர்க்குங்கோயில்
செழுமறையின் முதலெழுத்துச் சேர்ந்தகோயில்
தீராத வினையனைத்துந் தீர்க்குங்கோயில்
திருவரங்கமெனத்திகழுங்கோயில்தானே. 27

கண்ணனடியிணை யெமக்குக் காட்டும் வெற்புக்
கடுவினையரிருவினையும் கடியும் வெற்புத்
திண்ணமிது வீடென்னத் திகழும் வெற்புத்
தெளிந்த பெருந்தீர்த்தங்கள் செறிந்தவெற்புப்
புண்ணியத்தின் புகலிதென்னப் புகழும் வெற்புப்
பொன்னுலகிற் போகமெல்லாம் புணர்க்கும் வெற்பு
விண்ணவரு மண்ணவரும் விரும்பும் வெற்பு
வேங்கடவெற்பென விளங்கும் வேதவெற்பே. 28

உத்தமவமர்த்தலமமைத்ததோரெழிற்றனுவினுய்த்த கணையால்
அத்திரவரக்கன்முடிபத்துமொருகொத்தென வுதிர்த்த திறலோன்
மத்துறுமிகுத்த தயிர்மொய்த்தவெணெய் வைத்ததுணுமத்தனிடமாம்
அத்திகிரிபத்தர்வினை தொத்தறவறுக்கு மணியத்திகிரியே. 29

தேனார் கமலத் திருமகள் நாதன் றிகழ்ந்துறையும்
வானாடுகந்தவர் வையத்திருப்பிடம் வன்றருமக்
கானாரிமயமுங் கங்கையும் காவிரியுங் கடலும்
நானாநகரமு நாகமுங் கூடிய நன்னிலமே. 30

நிர்யாணாதிகாரம்

நன்னிலமாமது நற்பகலாமது நன்னிமித்தம்
என்னலுமாமதியாதானுமா மங்கடியவர்க்கு
மின்னிலைமேனி விடும்பயணத்து விலக்கிலதோர்
நன்னிலையா நடு நாடிவழிக்கு நடைபெறவே. 31

கதிவிசேஷாதிகாரம்

நடைபெற வங்கிபகலொளி நாளுத்தராயணமாண்டு
இடைவருகாற்றிரவி யிரவின்பதி மின்வருணன்
குடையுடைவானவர்கோன் பிரசாபதி யென்றிவரால்
இடையிடை போகங்களெய்தி யெழிற்பதமேறுவரே. 32

பரிபூர்ணப்ரஹ்மாநுபவாதிகாரம்

ஏறி எழிற்பத மெல்லாவுயிர்க்கு மிதமுகக்கும்
நாறுதுழாய் முடி நாதனை நண்ணி யடிமையில்நம்
கூறுகவர்ந்து குருக்கள் குழாங்கள் குரைகழற் கீழ்
மாறுதலின்றி மகிழ்ந்தெழும்போகத்து மன்னுவமே. 33

ஸித்தோபாயசோதநாதிகாரம்

மன்னுமனைத்துறவாய் மருண்மாற்றருளாழியுமாய்த்
தன்னினைவாலனைத்துந் தரித்தோங்குந்தனியிறையாய்
இன்னமுதத்தமுதாலிரங்குந் திருநாரணனே
மன்னியவன்சரண் மற்றோர் பற்றின்றி வரிப்பவர்க்கே. 34

ஸாத்யோபாயசோதநாதிகாரம்

வரிக்கின்றனன் பரன் யாவரையென்னு மறையதனில்
வரிக்கின்றதுங்குறியொன்றால் வினையரையாதலினும்
உரைக்கின்ற நன்னெறியோரும்படிகளிலோர்ந்துலகம்
தரிக்கின்ற தாரகனார் தகவால்தரிக்கின்றனமே. 35

ப்ரபாவவ்யவஸ்தாதிகாரம்

தகவாற்றரிக்கின்ற தன்னடியார்களைத் தன்றிறத்தில்
மிகவாதரஞ்செய்யுமெய்யருள் வித்தகன் மெய்யுரையின்

அகவாயறிந்தவராரணநீதிநெறிகுலைதல்
உகவாரெனவெங்கள் தேசிகருண்மையுரைத்தனரே. 36

ப்ரபாவ ரக்ஷாதிகாரம்

உண்மையுரைக்குமறைகளிலோங்கியவுத்தமனூர்
வண்மையளப்பரிதாதலின் வந்து கழல் பணிவார்
தண்மை கிடக்கத்தரமளவென்ற வியப்பிலதாம்
உண்மையுரைத்தனரோரந்தவிரவுயர்ந்தனரே. 37

மூலமந்த்ராதிகாரம்

எட்டுமாமூர்த்தியெண் கண்ணனெண்டிக்
கெட்டிறை யெண்பிரகிருதி
எட்டுமா வரைகளின்ற வெண்குணத்தோ
னெட்டெணு மெண்குணமதியோர்க்கு
எட்டுமாமல ரெண்சித்தி யெண்பத்தி
யெட்டுயோகாங்கமெண்செல்வம்
எட்டுமாகுண மெட்டெட்டெணுங்கலை
யெட்டிரத மேலனவு மெட்டினவே. 38

உயர்ந்த நங்காவலனல்லார்க்குரிமை துறந்துயிராய்
மயர்ந்தமை தீர்ந்துமற்றோர் வழியின்றி யடைக்கலமாய்ப்
பயந்தவன் நாரணன் பாதங்கள் சேர்ந்த பழவடியார்
நயந்த குற்றேவலெல்லா நாடு நன் மனு வோதினமே. 39

த்வயாதிகாரம்

ஓதுமிரண்டையிசை த்தருளாலுதவுந்திருமால்
பாதமிரண்டுஞ்சரணெனப்பற்றி நம் பங்கயத்தாள்
நாதனை நண்ணி நலந்திகழ் நாட்டிலடிமையெல்லாம்
கோதிலுணர்த்தியுடன் கொள்ளுமாறு குறித்தனமே. 40

சரமசுலோகாதிகாரம்

ஒண்டொடியாள் திருமகளுந்தானுமாகி
யொருநினைவா லீன்ற வுயிரெல்லாமுய்ய
வண்டுவரைநகர் வாழ வசுதேவற்காய்
மன்னவற்குத் தேர்ப்பாகனாகி நின்ற
தண்டுளவமலர்மார்பன் றானே சொன்ன
தனித்தருமந்தானெமக்காய்த் தன்னையென்றுங்
கண்டு களித்தடிசூட விலக்காய் நின்ற
கண்புதையல் விளையாட்டைக்கழிக்கின்றானே. 41

மூண்டாலு மரியதனின் முயலவேண்டா
முன்னமதிலாசைதனை விடுகை திண்மை
வேண்டாது சரணநெறி வேறோர் கூட்டு
வேண்டிலயனத்திரம்போல வெள்கி நிற்கும்
நீண்டாகுநிறைமதியோர் நெறியிற்கூடா
நின்றனிமை துணையாக வென்றன் பாதம்
பூண்டாலுன்பிழைகளெல்லாம்பொறுப்பனென்ற
புண்ணியனார் புகழனைத்தும் புகழுவோமே. 42

சாதனமு நற்பயனு நானே யாவன்
சாதகனு மென்வயமா யென்னைப் பற்றும்
சாதனமுஞ் சரணநெறி யன்றுமக்குச்
சாதனங்களிந் நிலைக்கோரிடையினில்லா
வேதனைசேர் வேறங்கமிதனில் வேண்டா
வேறெல்லாநிற்குநிலை நானே நிற்பன்
தூதனுமா நாதனுமா மென்னைப் பற்றிச்
சோகந்தீரென வுரைத்தான் சூழ்கின்றானே. 43

தன்னினைவில்விலக்கின்றித் தன்னை நண்ணார்
நினைவனைத்துந் தான்விளைத்தும் விலக்குநாதன்
என்னினைவை யிப்பவத்தி லின்று மாற்றி
யிணையடிக்கீ ழடைக்கலமென்றெம்மைவைத்து
முன்னினைவால் யாம் முயன்ற வினையால் வந்த
முனிவயர்ந்து முத்திதர முன்னே தோன்றி
நன்னினைவானுமிசையுங் காலமின்றோ
நாளையோவென்று நகை செய்கின்றானே. 44

குறிப்புடன் மேவுந் தருமங்களின்றியக்கோவலனார்
வெறித்துளவக்கழல் மெய்யரணென்று விரைந்தடைந்து
பிறித்த வினைத்திரள் பின்தொடராவகை யப்பெரியோர்
மறிப்புடை மன்னருள் வாசகத்தால் மருளற்றனமே 45

ஆசார்யக்ருத்யாதிகாரம்

பாட்டுக்குரிய பழையவர் மூவரைப் பண்டொருகால்
மாட்டுக்கருள் தருமாயன் மலிந்து வருத்துதால்
நாட்டுக்கிருள் செக நான்மறையந்தி நடைவிளங்க
வீட்டுக்கிடைகழிக்கே வெளிகாட்டு மம் மெய்விளக்கே 46

மருளற்ற தேசிகர் வானுகப்பாலிந்த வையமெல்லாம்
இருளற் றிறைவ னிணையடி பூண்டுய வெண்ணுதலால்
தெருளுற்ற செந்தொழிற்செல்வம் பெருகிச் சிறந்தவர்பால்
அருளுற்ற சிந்தையினு லழியா விளக்கேற்றினரே. 47

சிஷ்யக்ருத்யாதிகாரம்

ஏற்றி மனத்தெழில் ஞானவிளக்கை யிருளனைத்தும்
மாற்றினவர்க்கொரு கைம்மாறு மாயனுங் காணகில்லான்
போற்றியுகப்பதும் புந்தியிற்கொள்வதும் பொங்குபுகழ்
சாற்றி வளர்ப்பதுஞ்சற்றல்லவோமுன்னம் பெற்றதற்கே. 48

நிகமநாதிகாரம்

உறுசகடமுடையவொருகாலுற்றுணர்ந்தன
உடன்மருதமொடியவொருபோதிற்றவழ்ந்தன
உறிதடவுமளவி லுர லூடுற்று நின்றன
உறுநெறியோர் தருமன்விடு தூதுக்குகந்தன
மறநெறியர் முறியபிருதானத்துவந்தன
மலர்மகள் கைவருடமலர்போதிற்சிவந்தன
மறுபிறவியறுமுனிவர் மாலுக்கியைந்தன
மனுமுறையில் வருவதோர் விமானத்துறைந்தன
அறமுடை விசயனமர் தேரிற்றிகழ்ந்தன
அடலுரகபட மடியவாடிக் கடிந்தன
அறுசமய மறிவரிய தானத்தமர்ந்தன்
அணிகுருகை நகர்முனிவர் நாவுக்கமைந்தன
வெறியுடைய துளவமலர் வீறுக்கணிந்தன
விமுகரியொர் குமரனென மேவிச்சிறந்தன
விறலசுரர் படையடைய வீயத்துரந்தன
விடலரிய பெரியபெருமாள் மென்பதங்களே. 49

முன்பெற்ற ஞானமுமோகந்துறக்கலுமூன்றுரையில்
தன்பற்ற தன்மையுந் தாழ்ந்தவர்க்கீயுந் தனித்தகவும்
மன்பற்றி நின்றவகை யுரைக்கின்ற மறையவர்பால்
சின்பற்றியென்பயன் சீரறிவோர்க்கிவை செப்பினமே. 50

செப்பச்செவிக்கமுதென்னத்திகழுஞ்செழுங்குணத்துத்
தப்பற்றவருக்குத் தாமேயுகந்து தருந்தகவால்
ஒப்பற்ற நான்மறையுள்ளக்கருத்திலுறைத்துரைத்த
முப்பத்திரண்டிவை முத்தமிழ்சேர்ந்தமொழித்திருவே. 51

மறையுரைக்கும் பொருளெல்லாம் மெய்யென்றுரோர்வார்
மன்னிய கூர்மதியுடையார் வண்குணத்தில்
குறையுரைக்க நினைவில்லார் குருக்கள்தம்பால்
கோதற்ற மனம் பெற்றுர் கொள்வார் நம்மைச்
சிறைவளர்க்குஞ் சிலமாந்தர் சங்கேதத்தால்
சிதையாத திண்மதியோர் தெரிந்ததோரார்
பொறைநிலத்தில் மிகும் புனிதர் காட்டுமெங்கள்
பொன்றுத நன்னெறியிற் புகுதுவாரே. 52

இதுவழி யின்னமுதென்றவரின் புலன் வேறிடுவார்
இதுவழியா மலவென்றறிவா ரெங்கள் தேசிகரே
இதுவழியெய்துக வென்றுகப்பா லெம் பிழைபொறுப்பார்
இதுவழியாமறையோரருளால் யாமிசைந்தனமே. 53

எட்டுமிரண்டு மறியாதவெம்மை யிவையறிவித்து
எட்டவொண்ணுத விடந்தரு மெங்களம்மாதவனுர்
முட்டவினைத்திரள்மாள முயன்றிடு மஞ்சலென்றுர்
கட்டெழில் வாசகத்தாற் கலங்காநிலை பெற்றனமே. 54

வானுளமர்ந்தவருக்கும் வருந்தவருநிலைகள்
தானுளனாயுகக்குந்தர மிங்கு நமக்குளதே
கூனுள நெஞ்சுகளாற் குற்றமெண்ணியிகழ்ந்திடினும்
தேனுளபாதமலர்த் திருமாலுக்குத் தித்திக்குமே. 55

வெள்ளைப்பரிமுகர் தேசிகராய் விரகா லடியோம்
உள்ளத்தெழுதிய தோலையிலிட்டனம் யாமிதற்கென்
கொள்ளத் துணியினுங் கோதென் றிகழினுங் கூர்மதியீர்!
எள்ளத்தனை யுகவா திகழாதெம் மெழில்மதியே. 56

---

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

ஸ்ரீ:

ஸ்ரீமதே ரங்க ராமாநுஜ மஹாதேசிகாய நம:

ஸ்ரீமதே வேதாந்த ராமாநுஜ மஹாதேசிகாய நம:

ஸ்ரீமதே கோபாலார்ய மஹாதேசிகாய நம:

ஸ்ரீமதே வேதாந்த ராமாநுஜ மஹாதேசிகாய நம:

ஸ்ரீமதே நிகமாந்த மஹாதேசிகாய நம:

# அதிகார ஸங்கிரஹ பாசுரங்களின் உரை

## குரு பரம்பராஸாரம்

ஸ்ரீமத் ரஹஸ்யத்ரய ஸாரத்தை ஒருவன் ஆசார்யனிடம் படிப்பதற்கு முன்னாலே குருபரம்பராஸாரம் என்கிற புஸ்தகத்தைப் படித்து, அதில் சொல்லிய ஸங்கதிகளைத் தெரிந்து கொண்டு, தன்னுடைய ஆசார்யன் முதலான ஆசார்யவரிசையை எம்பெருமான் வரையில் வணங்கி, ஸ்ரீமத் ரஹஸஸ்யத்ரய ஸாரத்தைப் படிக்கவேண்டுமென்று எண்ணி, ஸ்ரீ தேசிகன் இந்த புஸ்தகத்தை எழுதியிருக்கிறார்.

இதில் ஸ்ரீ தேசிகன், மங்களமாக வடமொழியில் ஒரு ச்லோகம் அருளிச் செய்து, அதிக மங்களத்திற்காக இரண்டு பாட்டுக்களை அருளிச் செய்கிறார்.

**பொய்கைமுனி பூதத்தார் பேயாழ் வார்தண்**
**பொருநல்வருங் குருகேசன் விட்டு சித்தன்***
**துய்யகுல சேகரனம் பாண நாதன்**
**தொண்டரடிப் பொடிமழிசை வந்த சோதி***
**வையமெலா மறைவிளங்க வாள்வே லேந்து**
**மங்கையர்கோ னென்றிவர்கண் மகிழ்ந்து பாடும்***
**செய்யதமிழ் மாலைகணாந் தெளிய வோதித்**
**தெளியாத மறைநிலங்க டெளிகின்றோமே.** (1)

(பதவுரை.) பொய்கைமுனி, பூதத்தார், பேயாழ்வார், தண்-குளுமையான, பொருநல் - தாம்ரபர்ணி யென்னும் நதியின் கரையில், வரும் - அவதாரஞ் செய்த, குருகேசன் - குருகையென்னும் நகரத்திற்குத் தலைவரான நம்மாழ்வார், விட்டுசித்தன் - பெரியாழ்வார், துய்ய - பரிசுத்தமான மனதையுடைய, குல சேகரன், நம் பாணநாதன் - திருப்பாணாழ்வாராகிற நம்முடைய ஸ்வாமி,

தொண்டர் அடிப்பொடி, மழிசை - திருமழிசையில், வந்த - அவதாரஞ் செய்த, சோதி - ஜ்யோதிஸ்ஸான திருமழிசைப்பிரான், வையம் எல்லாம் - உலகத்தில் எங்கும், மறை - வேதங்களின் பொருள், விளங்க - நன்றாய்த் தெரியும்படி, வாள் - கத்தியையும், வேல் - வேல் என்கிற ஆயுதத்தையும், ஏந்தும் - ஏந்திக் கொண்டிருந்த, மங்கையர் மங்கையென்னும் நகரத்திலிருந்தவர்களுக்கு, கோன் - ஸ்வாமியான திருமங்கையாழ்வார், - என்று இவர்கள், மகிழ்ந்து - எம்பெரு மானை அநுபவித்து ஸந்தோஷப்பட்டு, பாடும் - அது உள்ளடங்காமல் பாடின, செய்ய - நல்ல, தமிழ்மாலைகள் - தமிழ்ப் பாட்டுக்களை, நாம், தெளிய - அதுவோ இதுவோ என்ற ஸந்தேஹமும், ஒன்றை வேறொன்றாக எண்ணுகிற மயக்கமுமில்லாமல், ஓதி - ஆசார்யர்களிடத்தில் படித்து, மறை - வேதத்தில், தெளியாத - அர்த்தம் இன்னதென்று தெரியாத, நிலங்கள் - இடங்களை, தெளிகின்றோம்.

(கருத்து.) பொய்கை முனி முதலான பத்து ஆழ்வார்களும் எம்பெரு மானை அநுபவித்து, அதினாலுண்டான ஆநந்தமானது உள்ளடங்காமல் தமிழ்ப் பாட்டுக்களைப் பாடினார்கள். அவைகள் படிக்கும்போதே வருத்த மில்லாமல் பொருளைத் தெரிவிக்கிறவைகளாகவும், பூமாலைகள் போல் எம்பெருமானுக்கு ஸந்தோஷத்தைக் கொடுப்பவைகளாகவும் இருக்கின்றன. அவைகளையும், அவைகளின் பொருள்களையும் நாம் ஒரு குருவினிடத்தில் நன்றாகப் படித்து, தெளிவாகப் பொருள் தெரியாத வேதத்திலுள்ள இடங் களைத் தெளிவாக அறிகின்றோம்.

குறிப்பு: - (1) தண் பொருநல் - குளுமையான தாம்ரபர்ணியைச் சொன்னதனாலே ஆழ்வாருடைய மனது மிகவும் ஈரமுள்ளது (இரக்கமுள்ளது) என்று காட்டப்படுகிறது. மேலும் கலியுகத்திலும் எம்பெருமானை உயர்ந்த புருஷார்த்தமாக எண்ணுகிறவர்கள் பிறக்கப் போகிறார்கள் என்றும், தமிழ்தேசத்தில் அப்படி அனேகம் பேர்கள் அவதரிப்பார்களென்றும் சொல்லி, அப்படி அவதாரம் பண்ணுகிற இடங்களை ஸ்ரீ பாகவதத்தில் சொல்லியிருக் கிறது. அந்த ஸங்கதியை நம்முடைய நினைவிற்குக் கொண்டு வருவதற்காக தாம்ரபர்ணியைச் சொன்னது.

(2) பெரிய ஆழ்வாரைச் சொன்னதினாலே இவர் திருமகளான ஸ்ரீ ஆண்டாளையும் சொன்னபடி.

(3) மந்திரிகள் சில ஸ்ரீ வைஷ்ணவர்களின் பேரில் குற்றம் சாட்டினபோது, அவர்கள் குற்றம்செய்திருக்க மாட்டார்கள் என்றும், பாம்பின் குடத்தில் நான்

கையிடுவேன் என்றும் குலசேகர ஆழ்வார் சொன்னதைக் கொண்டு, அவரை 'துய்ய' என்று விசேஷித்தது.

(4) திருப்பாணாழ்வாரைத் தோளில் ஏற்றிக்கொண்டு வரும்படி. ஒரு பிராம்மணனுக்கு ஸ்ரீ ரங்கநாதன் கட்டளையிட, அப்படியே அவர் அவரை எழுந்தருளப் பண்ணிக் கொண்டு கோவிலுக்குள் வந்தார். ஆகையாலே ஆழ்வாருக்கு முனிவாஹநன் என்று பெயர் வந்தது. ஸ்ரீ தேசிகனுக்கும் ஸ்ரீ ரங்கநாதன் வேதாந்தாசாரியர் என்று திருநாமம் சாற்றினார். இந்த ஸம்பந் தத்தைக் கொண்டு இந்த ஆழ்வாரை நம்முடைய நாதன் என்று சொன்னது.

(5) பெரும்புலியூரில் ஒருயாகம் நடக்கும் காலத்தில், தன்னைப் பரம் ஜ்யோதிஸ்ஸான எம்பெருமானாகக் காட்டினதைக் கொண்டு திருமழிசை யாழ்வாரை சோதி என்று சொன்னது.

(6) திருமங்கையாழ்வார், வாளையும் வில்லையும் கையில் வைத்துக் கொண்டு வழிப்பறி செய்து கிடைத்த பொருளைக் கொண்டு பிராம்மண போஜநம் செய்துவந்தார். அப்போது ஸ்ரீ ரங்கநாதன் திருவாலியில் கல்யாணம் செய்து கொண்டு பிராட்டியுடன் திருநகரிக்கு எழுந்தருளும்போது அவருடைய எல்லா திருவாபரணங்களையும் பறித்துக் கொண்டார். எம்பெருமான் ஒரு வியா ஜத்தைக் கொண்டு அவருக்குத் திருமந்திரத்தை உபதேசிக்க, அவருக்கு ஞானம் பிறந்து வேதத்தின் அர்த்தங்களை எல்லாம் பெரிய திருமொழி முதலான பிரபந்தங்களில் வெளியிட்டார். அவர் வாளையும் வேலையும் ஏந்தினது உலகத்தில் வேதத்தின் பொருள் நன்றாய் விளங்கும்படி ஆயிற்றென்று அவரைக் கொண்டாடின படி. சிஷ்யர்கள் குருவினிடம் ஸமித்து முதலான உபஹாரங் களைக் கொண்டு போவார்கள்; இவர் வாளையும் வேலையும் கொண்டு போனார். அவர்கள் தன் சக்திக்குத் தகுந்தபடி பொருளைக் குரு தக்ஷிணையாகக் கொடுப்பார்கள்; இவர் குருவினிடமிருந்து எல்லா ஸொத் தையும் பிடுங்கிக் கொண்டார். அவர்கள் குருவை வணங்கி உபதேசம் பெறுவார்கள்; இவர் எம்பெருமானை நிர்ப்பந்தம் செய்து உபதேசம் பெற்றார். அவர்கள் பெற்ற உபதேசம் அவர்களுக்கே உதவும்; இவர் பெற்ற உப தேசமானது உலகத்திற்கே உதவும் படியாயிற்று. இந்த ஆச்சர்யத்தை ஸ்ரீ தேசிகன் இங்கே வெளியிடுகிறார்.

(7) பராசரர் முதலான ரிஷிகள் செய்த புராணங்களைக்காட்டிலும் ஆழ்வார்களுடைய பிரபந்தங்களுக்கு ஒரு ஏற்றம் உண்டு. இவைகள் வேதத்தில் சொன்ன ரஹஸ்யமான பொருள்களை மிகவும் தெளிவாய்க் காட்டுகின்றன.

இவைகளைப் படிப்பதினால் எம்பெருமானிடத்தில் உடனே ப்ரீதி உண்டாகும். இந்த உபசாரத்தினால் ஸ்ரீ தேசிகன் ஆழ்வார்களை வணங்கினது.

**இன்பத்தி லிறைஞ்சுதலி லிசையும் பேற்றி**
**லிகழாத பல்லுறவி லிராக மாற்றில்***
**தன்பற்றில் வினைவிலக்கிற் றகவோக் கத்திற்**
**றத்துவத்தை யுணர்த்துதலிற் றன்மை யாக்கில்***
**அன்பர்க்கே யவதரிக்கு மாய னிற்க**
**வருமைறகடமிழ்செய்தான் றாளே கொண்டு***
**துன்பற்ற மதுரகவி தோன்றக் காட்டுந்**
**தொல்வழியே கல்வழிக டுணிவார் கட்கே. (2)**

(ப-ரை) துன்பு - குற்றம், அற்ற - இல்லாதவரான, மதுரகவி, இன்பத்தில்- இனிமையாயிருப்பதில், இறைஞ்சுதலில்-ரக்ஷிக்கிறவனாக அடைவதில், இசையும் பேற்றில் - ஒப்புக்கொள்ளப்பட்ட லாபத்தில், (புருஷார்த்தத்தில்) இகழாத - விட்டுநீங்காத, பல் உறவில் - பலவிதமான - தாயாகவும், தகப்பனா கவும், குருவாகவும் இருக்கிற உறவுகளில், இராகம் மாற்றில் - கண்முதலிய இந்திரியங்களால் அநுபவிக்கக் கூடிய விஷயங்களிலுள்ள ஆசையை மாற்றுவதில் தன் பற்றில் - தன்னிடத்தில் பிடிப்பை யுண்டாக்குவதில், வினை விலக்கில் - முன் செய்த கர்மங்களைப் போக்குவதில், தகவு ஒக்கத்தில்- கருணையினுடைய உயர்த்தியில், தத்துவத்தை உணர்த்துதலில் - தத்துவத்தை (உண்மையான பொருள்களை) அறியும்படி செய்கையில், தன்மையாக்கில் - தன் ஸ்வபாவத்தை யுண்டாக்குகையில் - ஆகிய இந்தப்பத்து விஷயங்களில், அன்பர்க்கே - பக்தர்களுக்காகவே, அவதரிக்கும் - அவதாரஞ்செய்த, ஆயன் - கோபால உருவத்தைக் கொண்ட கிருஷ்ணன், நிற்க - இருக்கும் போது அவரை விட்டு விட்டு, அரு-அர்த்தம் அறியமுடியாத, மறைகள் - வேதத்தின் பொருள்களை, தமிழ் செய்தான் - தம்முடைய தமிழ்ப் பாட்டுக்களால் வெளியிட்ட நம்மாழ்வாருடைய, தாளே - திருவடிகளையே, கொண்டு அடைந்து, தோன்ற - உலகத்தாருக்குத் தோன்றும்படி, காட்டும் - காட்டின, தொல்வழியே - பழைய வழியே, துணிவார்கட்கு- தைரியமுடையவர்களுக்கு, நல்வழிகள் - நல்லவழிகள்.

(கருத்து.) மதுரகவியாழ்வார், அவதாரஞ் செய்து அக்காலத்திலிருந்த எம்பெருமானை விட்டு, பாட்டில் சொன்ன பத்து விஷயங்களில் ஆழ்வாரையே

யடைந்தார். இப்படி அவர் காட்டின வழியே முன்னோர்கள் நடந்த வழி. அதுவே விஷயங்களை ஜயித்து மோக்ஷம் பெறவேண்டுமென்று ஆசைப் படுகிறவர்கள் போக வேண்டிய வழி.

குறிப்பு, - (1) துன்பு - துன்பம், இந்த சொல்லானது, இங்கு துன்பத்துக்குக் காரணங்களான குற்றங்களைச் சொல்லுகிறது, அவைகளாவன: - ஒன்றை வேறொன்றாக நினைப்பது, மோசம் பண்ணுவது, தன்னைப் படித்தவனென்று எல்லாரும் கொண்டாட வேண்டுமென்றும், தனக்கு ஒரு லாபம் வேண்டு மென்றும், தன்னை யெல்லாரும் பூஜிக்க வேண்டும் என்றும் ஆசைப்படுவது, இவைகள் இவருக்கில்லாமையால் அவருடைய அநுஷ்டாநத்தை நாம் நம்பலாம் என்று கருத்து.

(2) இகழாத - இளப்பமென்று தள்ளாத என்று பொருள், அதின் காரிய மான விட்டுவடுவது இங்கே சொல்லப்படுகிறது.

(3) பழமையான வழி: - முன்னாலே இருந்த மைத்ரேயர் முதலான ருஷிகள் நடந்த வழி.

(4) இந்த ஆழ்வார் கண்ணிநுண்சிறுத்தாம்பு என்னும் பிரபந்தத்தில் ஒவ்வொரு பாட்டாலும் ஆழ்வார் தமக்குச் செய்த உபகாரத்தைச் சொல்லுகிறார். ஆழ்வாரே இவருக்கு இன்பமாய் இருந்தார். அந்த ஆநந்தாநுபவத்தை அடைவதற்கு அவரே உபாயம். அவரே இவர் ஒப்புக்கொண்ட புருஷார்த்தம். அவரே இவருக்கு எல்லாவிதமான உறவினர், அவரே இவருக்குள்ள விஷயங்களின் ஆசையைப் போக்கினார். அவரே இவரைத் தன்னிடம் வந்து சேரும்படி செய்தார். அவரே இவருடைய புண்ணியம்பாபமென்கிற இரண்டு விதங்களான கர்மங்களைப் போக்கினார். அவருடைய கருணைக்கு அள வில்லை. அவரே இவருக்குத் தன்னுடைய பிரபந்தங்களாலே அறிய வேண்டிய விஷயங்களை அறிவித்தார். அவரே ஜீவனுக்கு அடையவேண்டிய தன் மையை அடையும்படி செய்தார்.

(5) கர்மபந்தம் போகவேண்டுமென்று ஆசைப்படுகிறவர்கள் ஆசார்யனையே அடையவேண்டியது. அப்படிச் செய்யாமல் எம்பெரு மானையே அடைவதாலும், புஸ்தகங்களைப் பார்ப்பதாலும் ஒருவித பிரயோ ஜனமுமுண்டாகாது என்று இந்த ஆழ்வாருடைய அனுஷ்டானம் காட்டுகிறது.

இந்த பிரபந்தத்தில் சொல்லிய ஸங்கதிகள்: - (1.) ஒருவன் மோக்ஷம் வேண்டுமென்று ஆசைப்பட்டால், ஒரு ஆசார்யனை அடையவேண்டியது.

(2.) ஆசார்யனையும் அவனுடைய ஆசாரியர்களையும் எம்பெருமான் வரையில் (உள்பட) ஒவ்வொருவர் பெயரைச் சொல்லி வணங்க வேண்டியது. (3.) எம்பெருமானே ஆசார்யஉருவம் கொண்டு அவதாரம் செய்திருக்கிறான் என்று தெரிந்து கொண்டு, அவரிடத்தில் எம்பெருமானிடத்தில் போல மிகுந்த பக்தியைச் செய்ய வேண்டியது. (4.) ஆசாரியனை எப்போதும் கொண்டாடி, எல்லாரும் அவனை அறியும்படி அவருடைய குணங்களைப் புலம்பும் படி யான பக்தியைச் சிஷ்யன் செய்ய வேண்டியது.

ஒருவன் ஆசார்யனை வணங்குகிற வழியைக் காட்டுவதற்காக ஒரு பாட்டை அருளிச் செய்கிறார்.

**என்னுயிர்தந் தளித்தவரைச் சரணம் புக்கி**
**யானடைவே யவர்குருக்க ணிரைவணங்கிப்***
**பின்னருளால் பெரும்பூதூர் வந்த வள்ளல்**
**பெரியநம்பி யாளவந்தார் மணக்கால் நம்பி***
**நன்னெறியை யவர்க்குரைத்த வுய்யக் கொண்டார்**
**நாதமுனி சடகோபன் சேனை நாதன்***
**இன்னமுதத் திருமகளென் றிவரை முன்னிட்**
**டெம்பெருமான் திருவடி ளடைகின்றேனே (3)**

(ப.ரை) என் உயிர் - என் ஆத்மாவை, தந்து - கொடுத்து, அளித்தவரை- ரக்ஷித்த என்னுடைய ஆசார்யனை, சரணம்புக்கு- வணங்கி, யான் - நான், அவர் குருக்கள் நிறை - அவரது ஆசார்யர்களின் வரிசையை, வணங்கி, பின் - பின்பு, பெரும்பூதூர் ஸ்ரீ பெரும்பூதூரில், வந்த - அவதாரஞ்செய்த, வள்ளல் - உதார குணமுடைய ஸ்ரீ பாஷியகாரர், பெரியநம்பி, ஆளவந்தார், மணக்கால்நம்பி, நல் நெறியை - நல்ல வழியை, அதாவது பிரபத்தியை, அவர்க்கு - மணக்கால் நம்பிக்கு, உரைத்த - உபதேசம் செய்த, உய்யக்கொண்டார், நாதமுனி, சட கோபன், சேனைநாதன் - விஷ்வக்ஸேநர், இன் அமுதம் - இனிமையான அமுதம் போல் போக்யையான, திருமகள் - பெரியபிராட்டி, என்று இவர்களை, முன்னிட்டு - முன்னாலே வணங்கி, எம்பெருமான், திருவடிகள் - திருவடி களை, அடைகின்றேன்.

(கருத்து) இந்தப் பாட்டில் சொன்னபடி ஒருவன் தினந்தோறும் ஆசார்யர்களின் வரிசையை அனுஸந்தானம் பண்ணவேண்டியது. நான்

எம்பெருமானுக்காவே இருக்கிறவன் என்ற இந்த அர்த்தத்தை எனக்குத் தெரிவித்து என்னை ஒரு பொருளாகச் செய்து என்னை ரக்ஷித்த என்னுடைய அடுத்த ஆசாரியனையும், அவருடைய ஆசாரியர்கள் வரிசையையும், ஒருவர் பின்னால் ஒருவரை பிரீதியுடன் வணங்குகிறேன். இதன் பின்பு பெரும்பூதூரில் கிருபையினாலே வந்து அவதரித்த மஹோபகாரகனான ஸ்ரீ பாஷியகாரர், பெரியநம்பி, ஆளவந்தார், மணக்கால் நம்பி, உய்யக் கொண்டார், நாதமுனி, நம்மாழ்வார், சேனைமுதலியார், பிராட்டி இவர்களை வணங்கி, எம்பெரு மானை வணங்குகிறேன்.

குறிப்பு: - (1) நான் ஆசார்யனிடம் போவதற்கு முன்பு, எம்பெருமான் ஒருவன் இருக்கிறான் என்றும், நான் அவனுக்காகவே இருக்கிறேன் என்றும், ஆகையால் அவனுக்கு இஷ்டமான வேலைகளைச் செய்து அவனை ஸந்தோஷப் படுத்தவேண்டியது என்றும் அறியவில்லை. ஆகையினாலே அந்த காலத்தில் நான் இருந்தும் இல்லாதவனாகவே இருந்தேன். ஆசார்யனை அடைந்த பிறகு இந்த ஸங்கதிகளை அவருடைய உபதேசத்தால் தெரிந்து கொண்டு ஒரு வஸ்துவாக ஆனேன். இதைப் பாட்டில் என் உயிர் "தந்தளித் தவரை" என்று சொல்லியிருக்கிறது.

(2) ஸ்ரீபாஷியகாரர் அவதாரம் செய்ததற்கு முன்னாலே, எம்பெருமான் ஒருவன் இல்லை என்றும், வேறு தேவதைகளைப் பரதேவதை என்றும் வாதிகள் சொல்ல, நாம் அதை நம்பி இந்தப் பெரிய தனத்தை இழந்திருந்தோம். அவர் அவர்களுடைய குயுக்திகளைக் கண்டித்து, பிராட்டியும் எம்பெருமானுமாகிய மகாதனம் இருப்பதை நமக்குக் காட்டிக் கொடுத்தபடியால் இந்த உபகாரத்தை நினைத்து அவரை "வள்ளல்" என்று சொன்னது.

(3) நன்னெறி - பக்தியைக் காட்டிலும் பிரபத்தியானது அகிஞ்சநனான நமக்குத் தகுந்த மோக்ஷமார்க்கமென்று உய்யக் கொண்டார், மணக்கால் நம்பிக்கு உபதேசித்தார்.

(4) பிராட்டி இனிமையான அமிருதம் போல் எம்பெருமானுக்கும். போக்யையாய் இருக்கிறதைக் கொண்டு "இன்னமுதத் திருமகள்" என்று சொல்லிற்று.

நம்முடைய ஆசாரியர்களில் எம்பெருமானாரும், ஆளவந்தாரும், நாதமுனிகளும் மிகுந்த உபகாரம் செய்திருப்பதால், அவர்களைத் தனியே அநுஸந்தானம் செய்வதற்காக மூன்று பாட்டுக்களை அருளிச் செய்கிறார்.

इति विरुद्धं, एकं प्रत्येव कालभेदेन स्वप्रकाशत्वास्वप्रकाशत्वविरोधात्, किञ्च स्वप्रकाशत्वस्य कादाचित्कत्वे तस्यौपाधिकत्वमेव स्यात्, नतु स्वाभाविकत्वं तस्य, इति शङ्काद्वयमपि धर्मभूतज्ञानप्रतिबन्द्या परिहरन्, कारिकारूपेण निबद्ध्य दर्शयति -

**(तत्त्व-)**

**धियः स्वयंप्रकाशत्वं मुक्तौ स्वाभाविकं यथा ।**

**बद्धे कदाचित् संरुद्धं तथाऽत्रापि नियम्यते ।। १ ।।** इति ।।

अस्यार्थः- धियः, धर्मभूतज्ञानस्य, स्वयं प्रकाशत्वं बद्धे, जीवे, कदाचित् संरुद्धं= कदाचित् विषयप्रकाशनदशायां,कर्मणा प्रतिबद्धं, मुक्तौ= मुक्तिदशायां कदाचिदप्यसंरुद्धमित्यद्ध्याहृत्य योज्यं, इदमुपलक्षणं मुक्तौ वा संसारे वा विषयप्रकाशवेळायां सर्वस्यामप्यसंरुद्धमिति यावत् । अतः स्वाभाविकं यथा भवति, तथा= तेन प्रकारेणात्रापि= शुद्धसत्त्वद्रव्येऽपि स्वयंप्रकाशत्वं नियम्यते= व्यवस्थाप्यते, प्रतिबन्धककर्मापगमदशायां स्वयंप्रकाशत्वं, अन्यदा संरुद्धमिति व्यवस्थाप्यते, स्वयंप्रकाशत्वम् अस्वयंप्रकाशत्वञ्च यद्यप्येकत्र न संभवति, तथाऽपि धिय इवास्यापि स्वयंप्रकाशत्वमेव, किन्तु प्रतिबन्धकवशात् कदाचिदसत्कल्पं वर्तते, तस्मान्मणेरौज्ज्वल्यवद्वह्नेः दग्धृत्ववच्च स्वाभाविकमिति भावः । एतेन कादाचित्कत्वादस्वाभाविकम् इति शङ्का,एकं प्रत्येव कालभेदेनापि स्वयंप्रकाशत्व-तदभावसमर्थनं चानुपपन्नमिति शङ्का च निरस्ता । नहि मणिवह्न्योरौज्ज्वल्य-दग्धृत्वे प्रतिबन्धककादाचित्कत्वमात्रेणास्वाभाविकेन वा कालभेदेनानौज्ज्वल्या-दग्धृत्वसमानाधिकरणे इति ।। १ ।।

**(अव)** एवं चिदचितोर्निरूपणानन्तरमीश्वरस्वरूपमपि परव्यूहवि-भवान्तर्याम्यर्चारूपेण पञ्चधा निरूप्य, तत्त्वत्रयमिदमवश्यं मन्दाधिकारिणामपि ज्ञातव्यमेव । अत्यन्तोपयुक्तत्वात् । नहि यावन्तश्शास्त्रार्थाः तावतामपि ज्ञानेन भाव्यं, नाप्युपयुक्तांशमपि परित्यज्य तूष्णीमवस्थातव्यं, किन्तूपयुक्तांशमवश्यं ज्ञातव्यमेवेत्याह-

**उपयुक्तेषु वैशद्यं त्रिवर्गनिरपेक्षता ।**
**करणत्रयसारूप्यमिति सौख्यरसायनम् ।। २ ।। इति ।।**

अस्यार्थः- उपयुक्तेषु = स्वाभिमतपुमर्थोपयुक्तेषु वस्तुषु; वैशद्यं; बुद्धिवैशद्यं, सन्देहाद्यपगमेन निर्मलज्ञानमिति यावत्। ननु? धर्मार्थकामानामभ्यर्हितत्वात् तदुपयुक्तशास्त्रार्थानामपि ज्ञानमावश्यकमेवेत्यत आह त्रिवर्गनिरपेक्षतेति । त्रिवर्गाः = धर्मार्थकामाः तदर्थं मया यतितव्यम् इत्यपेक्षाराहित्यं, अतिक्लेश(हेय) रूपत्वादस्थिरफलत्वाच्च, किन्तु मोक्षापेक्षैव युक्ता, तदुपयुक्ता एव शास्त्रार्थाः यावद् बुद्धिबलं ज्ञातव्याः । ननु मनसि मोक्षातिरिक्तपुरुषार्थकामनाविरहेऽपि प्रयोजनान्तरपरलौकिकपुरुषानुसरणाय वा ख्यात्यर्थं वा सर्वेऽपि शास्त्रार्थाः ज्ञातव्या इत्यत आह-करणत्रयसारूप्यमिति । मनोवाक्कायानामैकरूप्यम्; मनसि यदेव वर्तते तदेव वाचा तदेव कर्मणाऽप्यनुष्ठेयं, नतु डांभिकवदन्यथान्यथा भवितव्यमिति भावः । इत्युक्तत्रयं सौख्यरसायनं,सौख्यहेतुभूतं रसायनं, शर्करादिसंयोगेन विरचितमास्वाद्यवस्तु यथाऽऽत्मप्रीतय एव कल्पते तथैवेति भावः ।। २ ।।

## अधिकारिविभागाधिकारः ।।

**(अव)** एवं चिदचिदीश्वरेषु निरूपितेषु कस्स ईश्वर इत्यपेक्षायां ब्रह्म-शिवादीनां जीवत्वकर्मवश्यत्वादिनाऽनीश्वरत्वं विष्णोरेवेश्वरत्वम् अभिधाय, तदनु जीवस्य सांसारिकसङ्गेषु दोषपर्यालोचनया संजातसंसारजिहासस्य मुमुक्षुत्वं भवतीत्युक्त्वा तस्य च मुमुक्षोः भक्तिप्रपत्त्यन्यतरोपायानुष्ठानेन भाव्यमित्युपदिश्य तदनन्तराधिकारे सचाधिकारी द्विविधःसद्वारकप्रपत्तिनिष्ठोऽद्वारकप्रपत्तिनिष्ठश्चेति द्वैविध्यं प्रदर्शितम् । कथमिदम् उपपद्यते । भक्तोऽपि सद्वारकप्रपत्तिनिष्ठ इति भक्तस्य प्रपन्नत्वाभावात् इत्यत आह-

**(अधि–)**

**स्वतन्त्राङ्गप्रपत्तिभ्यां प्रपन्नावत्र तावुभौ ।**
**फलसाधनभक्तिभ्यां भक्तावपि च दर्शितौ ।। ३ ।। इति ।।**

अस्यार्थः- प्रपत्तिर्द्वेधा; स्वतन्त्रप्रपत्तिरङ्गप्रपत्तिश्चेति। भक्तिश्च द्विविधा; फलभूता साधनभूता चेति। तत्र स्वतन्त्रत्वं भक्तिमद्वारीकृत्य स्वयमेवाङ्गिभूतत्वं, तथा च प्रपन्नस्य स्वतन्त्रप्रपत्तिनिष्ठत्वात् भक्तस्य चाङ्गप्रपत्तिनिष्ठतया उभावपि प्रपन्नावेव प्रपन्नस्य फलभक्तिरन्यस्य साधनभक्तिरिति उभौ च भक्तावपि दर्शितौ। प्रमाणवचनैरिति शेषः ।। ३ ।।

## उपायविभागाधिकारः ।।

**(अव)** अथोपायविभागं वक्तुमुपासनप्रपत्तिसाधारणसामान्यलक्षणं सर्वविद्यासाधारणसत्यत्वज्ञानत्वादिस्वरूपनिरूपकगुणैस्तत्तद्विद्याप्रतिनियततया तत्र तत्राम्नातैर्वसि(शि)ष्ठत्वप्रतिष्ठात्वसंयद्वामत्वादिविशेषगुणैश्च विशिष्टब्रह्मविशेष्यक्ज्ञानविकासविशेष्यत्वं सर्वविद्यासाधारण्येन, उपेयलक्षणं तु - समस्तकल्याणगुणविभूत्यादिविशिष्टब्रह्मविषयानुभवविशेषत्वमित्यभिहितम् । तत्र शङ्का, 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती' ति न्यायात् यथोपासनमेव शास्त्रे प्राप्तिः प्रसिद्धा, अतस्तत्तद्विद्याप्रतिनियतगुणमात्रविशिष्टब्रह्मानुभव एव उपेयशब्दार्थः ; नतु सकलकल्याणगुणविभूत्यादिविशिष्टतदनुभव इत्यत्राह-

**उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया ।**
**सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम् ।। ४ ।। इति ।।**

अस्यार्थः-उपासितस्य; उपासने विशेषणतया विषयस्य, गुणादेः, आदिशब्देन पर्यङ्कादिस्थानपरिग्रहः, तस्य प्राप्तावपि या अबहिष्क्रिया प्राप्यब्रह्मानुभवेऽपि विशेषणतया क्रोडीकार इत्यर्थः । सा= अबहिष्क्रिया तत्क्रतुनयग्राह्या तत्क्रतुनयः, यथोपासनन्यायः, तेन ग्राह्या= तस्य विषयः । तत्क्रतुनयस्य उपासितगुणाद्यवर्जनमेव फलं, नत्वाकारान्तरस्य निरूपितस्वरूपविशेषणस्य सौशील्यादेर्वर्जनम्, अन्यथाऽनुपासितगुणानामननुभवे मुक्तौ सर्वगुणविशिष्टस्य ब्रह्मणः प्राप्यतया सर्वासूपासनासु सर्वगुणविशिष्टमुपास्यमित्युपासननिरूपणभेदः क्वापि न स्यादित्यतो नोक्तचोद्यावकाशः ।। ४ ।।

## साङ्गप्रपदनाधिकारः ।।

**(अव)** अथ भक्तिप्रपत्तिस्वरूपप्रकारभेदमिति प्रतिपाद्य तदनन्तरं प्रपत्तियोग्यतामभिधाय, तदनु प्रपत्तेः परिकरान् आनुकूल्यसङ्कल्पादीन् निरूप्य, तदनु साङ्गप्रपदनस्य स्वरूपं आत्मस्वरूपम् आत्मसमर्पणफलसमर्पणविशिष्टं रक्षाभर-समर्पणमेवेत्युपदिश्य नेदं भरसमर्पणमितरविद्यासाधारणम् इत्याह-

**(साङ्ग-)**

**मुमुक्षुमात्रसामान्यं स्वरूपादिसमर्पणम् ।**
**अकिञ्चने भरन्यासस्त्वधिकोऽङ्गितया स्थितः ।। ५ ।।** इति ।।

अस्यार्थः- स्वरूपसमर्पणं, आदिशब्दविवक्षितं फलसमर्पणञ्च मुमुक्षुमात्र-सामान्यं, सर्वमुमुक्षुसाधारणम् । अकिञ्चने= भक्त्यनधिकारिणि, 'आत्मात्मीय-भरन्यासो ह्यात्मनिक्षेप उच्यते' इत्यङ्गितया= प्रधानतया स्थितः=विहितः, भरन्यासः= आत्मरक्षाभरन्यासः, अधिकः=इतरविद्यापेक्षया अधिकः, इतरविद्यासु स्वरूपफलयोस्समर्पणमेव, प्रपत्तौ तु तदुभयविशिष्टं भरसमर्पणमिति निष्कर्षः ।। ५ ।।

**(अव)** ''मुमुक्षुमात्रसामान्यं स्वरूपादिसमर्पण''मित्यस्य व्यावर्त्यं दर्शयन् मुमुक्षुप्रपत्तिष्वपि भरन्यासानुवृत्तिश्च दर्शयति-

**(साङ्ग-)**

**अत्र रक्षाभरन्यासः समः सर्वफलार्थिनाम् ।**
**स्वरूपफलनिक्षेपस्त्वधिको मोक्षकाङ्क्षिणाम् ।। ६ ।।** इति ।।

अस्यार्थः - अत्र= प्रपत्तौ, रक्षाभरन्यासः, सर्वफलार्थिनाम्, समः; सर्वेषां अकिञ्चनाधिकारिणां प्रपत्तिमन्तरेणोपायान्तराशक्यत्वात् प्रपत्तेश्च भरन्यासात्म-कत्वादिति भावः ।। ६ ।।

**(अव)**अथ '' तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता । केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते'' इत्यात्मनिक्षेपलक्षणं निक्षेपरक्षायामुदाहृत्य ''तेन संरक्ष्यमाणस्य तदेकशेषभूतस्य= स्वरक्षणनैर्भर्य-तत्फल-स्वाम्यवियुक्तादिरूपो

निक्षेपः'' इति वचनार्थमपि सूचयित्वा ''इदं चात्र समर्पणतत्त्वम्'' इति तत्रोक्तमेवाङ्गिस्वरूपमत्राप्याह ।।

**(साङ्ग–)**

**स्वनिर्भरत्वपर्यन्तरक्षकैकार्थ्यभावनम् ।**

**त्यक्तरक्षाफलस्वाम्यं रक्ष्यस्यात्मसमर्पणम् ।। ७ ।। इति ।।**

अस्यार्थः - रक्ष्यस्य= तदेकशेषस्य आत्मभरार्पणं नाम त्यक्तरक्षाफलस्वाम्यं स्वनिर्भरत्वपर्यन्तरक्षकैकार्थ्यभावनम् इत्यन्वयः । रक्षायाःफलं-रक्षाफलं= नित्यकैङ्कर्यरूपं, तत्र च स्वाम्यं= इदं फलं ममेत्यभिमानरूपं, त्यक्तं रक्षाफलं स्वाम्यं यस्मिन्निति बहुव्रीहिः । तादृशं यत्स्वनिर्भरत्वपर्यन्तरक्षकैकार्थ्यभावनम् , स्वनिर्भरत्वं नाम स्वस्य रक्षायां भरो नास्तीत्यद्ध्यवसायः, तत्पर्यन्तं तच्छिरस्कञ्च तद्रक्षकैकार्थ्यभावनम् । आत्मस्वरूपतद्रक्षणभर-रक्षणफलेषु रक्षकस्य भगवत एवार्थत्वभावनम्= तच्छेषत्वभावनं, ''अहं मद्रक्षणभरो मद्रक्षणफलं तथा । न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद् बुधः ।।'' इति न्यासदशके प्रयोगः सूचितः, तत्र प्रयोगवाक्ये यथा स्वरूपादित्रिकस्य स्वस्मिन् सम्बन्धत्यागे सति श्रीपत्येकार्थभावनं प्रतीयते, तथाऽत्र रक्षणवाक्येऽपि त्रिकस्य स्वसम्बन्धत्यागः परस्वत्वापादनञ्च क्रियते, निर्भरत्वपदेन भरे स्वाम्यत्यागः, त्यक्तरक्षाफल-स्वाम्यमिति फले स्वाम्यत्यागश्च दर्शितः, स्वरूपे स्वाम्यत्यागस्त्वार्थः, प्रमाणवाक्येऽपि शाब्दतया आर्थतया च त्यागत्रयं समर्पणत्रयञ्च भाव्यम् ।।

प्रसङ्गात् साङ्गप्रपदनस्वरूपं लिख्यते-स्वामिन्! इतः प्रभृत्यानुकूल्येन वर्तिष्ये, प्रातिकूल्यान्निवृत्तोऽस्मि, ''अहमस्म्यपराधानामालयोऽकिञ्चनो ऽगतिः, अतीव कृपणोऽहं'' त्वमेव रक्षिष्यसीति विश्वसिमि, 'त्वं मे गोपायिता भव' इति पञ्चाङ्गसहितमिदमात्मस्वरूपं तवैव आत्मरक्षाभरं त्वयि न्यस्यामि, त्वमेवोपायान्तरस्थाने तिष्ठन् तत्कार्यं साधय, इतःपश्चादस्मद्यतननिरपेक्षो भवानेव रक्षतु, ततस्तदंशे निर्भरोऽहमस्मि, रक्षाफलस्वाम्यमपि शेषिणस्तवैव, न मम; अस्मिन् साङ्गप्रपदने मम कर्तृत्वमपि न, इदं प्रपदनमपि भगवद्वशीकरणमात्रं,

फलं प्रत्यव्यवहितो पायोऽपि-नेत्यद्ध्यवसायकरणं गुरुपरम्परानुसन्धानपूर्वकं आचार्योच्चारणानूच्चरितद्वयादिकरण मन्त्रविशिष्टं साङ्गप्रपदनम् ।। ७ ।।

**(अव)** अत्र चानुकूल्यप्रवृत्ति- प्रातिकूल्यनिवृत्तिसङ्कल्पयोः प्रपत्तिकाले सकृत्कर्तव्यत्वेऽपि तत ऊर्ध्वं यावज्जीवं तयोरनुवृत्तिरुपायफलभूतेत्युक्तम् ।। ननु तयोः प्रपत्तिफलत्वं नोपपद्यते, तदप्रार्थनेऽपि क्वचित् संभवदर्शनादित्यत्र यथाऽकृत्यकरणादेः प्रारब्धदुष्कृतफलत्वेन पश्चादपि तत्संभवः, तथा प्रारब्धसुकृतवशादपि क्वचित् तयोस्सिद्धिरित्याह-

**(साङ्ग–)**

**प्रवृत्तिरनुकूलेषु निवृत्तिश्चान्यतः फलम् ।**
**प्रारब्धसुकृताच्च स्यात् संकल्पे च प्रपत्तितः ।। ८ ।।** इति ।।

अस्यार्थः- फलं= फलभूता कैङ्कर्यभूता अनुकूलेषु प्रवृत्तिः, अन्यतः= प्रतिकूलेभ्यः निवृत्तिश्च प्रारब्धसुकृताच्च स्यात्, पुनःअस्मात्-संकल्पे= निरपाय-कैङ्कर्यमेव मे भूयादिति प्रपत्त्यनुष्ठानदशायां संकल्पे सति= प्रार्थने सति प्रपत्तित एव अन्यथा प्रारब्धसुकृतात् स्यादिति विवेकः ।। ८ ।।

## पुरुषार्थकाष्ठाधिकारः ।।

**(अव)** एवं कृतसाङ्गप्रपदनस्य कृतकृत्यतया मोक्षार्थप्रवृत्त्यादिविरामं स्वनिष्ठाभिज्ञानं उत्तरकृत्यानि चोक्त्वा, फलरूपकैङ्कर्यमपि भागवतकैङ्कर्यपर्यन्तं कार्यम् इति पुरुषार्थकाष्ठां प्रत्यवीवदत् । तत्र भागवतानां न मिथश्शेषित्वं येन तत्कैङ्कर्यस्य कार्यतेत्याशङ्कां मनसि निधाय, तेषामपि शेषित्वं भगवच्छेषित्वकाष्ठाभूतं भगवानेव स्वतन्त्रस्वामित्वात् स्वबहुमतिपात्रेषु भक्तेषु भक्तान् शेषतया विनियुङ्क्ते, न केवलं भगवत्प्रीत्यतिशयप्रयुक्तमेव भागवतानां शेषित्वं, किन्तु 'गुणैर्दास्यमुपागतः' इति गुणकृतदास्यप्रतिसंबन्धिशेषित्वं चास्तीति प्रतिपादितम्; अतो यथा भगवतो भागवतान् प्रत्यद्वारकं शेषित्वं, एवं भागवतमुखेन भागवतान् प्रति सद्वारकमपि शेषित्वमस्तीत्याह-

**नित्यं श्रिया समेतस्य भक्तैरात्मवतस्सदा ।**
**सह सद्वारकं च स्याच्छेषित्वं परमात्मनः ।। ९ ।। इति ।।**

अस्यार्थः- नित्यं श्रिया= रमया, समेतस्य= अविनाभूतस्य भक्तैः सदा आत्मवतः= 'ज्ञानी त्वात्मैव मे मतम्' इति तैरन्तरात्मवतः, परमात्मनः= भगवतः शेषित्वं सह, अद्वारकशेषित्वेन सह, सद्वारकञ्च स्यात्, यथा-देवदत्तस्य गृहमिदमित्यत्र तत्पत्न्यास्तदात्मजानाञ्च शेषित्वमवर्जनीयम्, एवमजस्राविनाभावादत्यन्त-प्रीतिविषयलक्ष्मीमुखेनैव स्वात्मतया लक्ष्म्यपेक्षयाऽप्यत्यन्तप्रीति-विषयभक्तजनमुखेनापि शेषित्वं प्रणाड्याऽपि भगवतस्सिद्ध्यतीति भावः ।। ९ ।।

**शास्त्रीयनियमनाधिकारः ।।**

**(अव)** शास्त्रीयनियमने -एवं भगवत्कैङ्कर्यं भागवतकैङ्कर्य-पर्यन्तमित्युक्तम्, तदपि शास्त्रीयनियमेनैव कर्तव्यं, अन्यथा भगवदप्रीतिरेव स्यात्। तद्धि कैङ्कर्यं द्विविधं, आज्ञानुज्ञारूपेण । उभयत्र नियमावश्यंभाव इति प्रतिपादयति द्वाभ्याम् ।।

**आज्ञानुज्ञाविभागेन द्विधा शास्त्रीयपद्धतिः ।**
**निग्रहानुदयायाऽऽद्या परा तत्तत्फलाप्तये ।। १० ।।**
**अनुज्ञया प्रवृत्तेऽपि क्रमकोपादिसम्भवे ।**
**आज्ञातिक्रमदोषः स्यान्नियमोऽतो दुरत्ययः ।। ११ ।। इति ।।**

अनयोरर्थः - शास्त्रीयपद्धतिः, शास्त्रीयस्य कैङ्कर्यस्य पद्धतिः=मार्गः, प्रवृत्तिरिति यावत् , आज्ञानुज्ञाविभागेन आज्ञाकैङ्कर्यम्, अनुज्ञाकैङ्कर्यञ्चेति द्विरूपम्। आद्या=आज्ञाकैङ्कर्यरूपा शास्त्रीयपद्धतिः । परा=अनुज्ञाकैङ्कर्यरूपा तत्तदनुज्ञाकैङ्कर्यप्रकरणाम्नातभगवन्मुखोल्लासमात्रफलका । अनुज्ञया प्रवृत्तेऽपि कैङ्कर्ये क्रमकोपादिसम्भवे- क्रमस्य कोपः=क्रमकोपः, अतिलङ्घनः=आदिशब्देन देशकालवस्तुस्वभावाद्यतिलङ्घनानि विवक्षितानि, तत्सम्भवे=तेषां प्रसक्तौ आज्ञातिक्रमदोषस्स्यात्, आज्ञातिलङ्घने यो दोषः स दोष अत्रापि स्यात् । अतो नियमः=शास्त्रीयनियमः, दुरत्ययः=दुर्लङ्घ्यः । मालाकरणादौ हि क्रमनियमः-

एतदनन्तरमेतत्कर्तव्यमिति । मालाकरणादिकं हि अशुचिदेशे न कर्तव्यमिति देशनियमः, प्रातरेव पुष्पार्जनं कर्तव्यमिति कालनियमः, दु(धु)त्तूरादिना न कर्तव्यमिति वस्तुनियमः, अस्नातेन न कर्तव्यमित्यवस्थानियमः इत्यादिशास्त्रीयनियमो दुरत्ययः । यद्यप्यनुज्ञाकैङ्कर्यं न प्रत्यवायपरीहारार्थं, तथापि भगवच्छास्त्रवराहपुराणादिविहितस्य साङ्गस्यानुज्ञाकैङ्कर्यस्य क्रमादिसहित-स्यैवोपदेशात् तादृशक्रमातिलङ्घनमपि अतिलङ्घनपर्यवसन्नम् शास्त्रीयत्वाविशेषात् इति भावः ।। ११ ।।

**(अव)** ननु भगवद्भक्त्या भगवन्मुखोल्लासाय क्रियमाणं कर्म कैङ्कर्य-पदवाच्यं,अतोऽनुज्ञाकैङ्कर्यं फलान्तरं विना भगवन्मुखोल्लासैकप्रयोजनकतया क्रियते, अतस्तत्र भक्तिरेव प्रयोजिका, न त्वाज्ञा । नित्यादिकं तु प्रत्यवाय-परिहारार्थमनुष्ठीयमानमाज्ञामात्रप्रयुक्तमाज्ञाकैङ्कर्यं, तत्राज्ञा विनियोजिका, न भक्तिः, यदा चाज्ञाकैङ्कर्यं भगवन्मुखोल्लासाय भक्त्याऽनुष्ठीयते प्रत्यवायपरिहारश्चार्थदिव सिद्ध्यतीति तदा तस्य द्विरूपता स्यादित्यत्राह-

**(शास्त्री–)**

**प्रत्यवायपरीहारे फलान्तरसमन्विते ।**
**तत्र संवलितं प्राहुरधिकारं विचक्षणाः ।। १२ ।।** इति ।।

अस्यार्थः-तत्र=नित्यनैमित्तिके, प्रत्यवायपरीहारे, फलान्तरसमन्विते, फलान्तरं =प्रत्यवायपरिहारातिरिक्तं, तेन समन्विते भक्त्याज्ञारूपविनियोजिकयोः पृथक्त्वेऽपि शब्दान्तराभ्यासादिकर्मभेदप्रयोजकप्रमाणविरहात् वाचकशब्दैक्यात् कर्तृकालाद्यभेदाच्च कर्मैक्ये सिद्धे जीवनस्वर्गाद्यधिकारभेदविशिष्टज्योतिष्टो-मादाविव, ''सर्वथापि तत एव उभयलिङ्गात्'' इति नयेन उभयार्थमनुष्ठीयते, तत्राधिकारं संवलितं विचक्षणाः आहुः, सकृदनुष्ठितादेव तस्मात् फलद्वयसिद्धेः अधिकारद्वयस्य संवलितत्वमिति न कर्मभेद इति ।। १२ ।।

**(अव)** एवं संवलिताधिकारत्वादेव न द्विरनुष्ठानं कामार्थमनुष्ठितादेव नित्यसिद्धेः न तन्नित्यात् काम्यसिद्धिरित्यभिप्रायेणाह-

(शास्त्री-)

**नित्यकाम्यस्वरूपैक्ये विनियोगपृथक्त्वतः।**

**फलार्थं क्रियमाणेऽपि नित्यं भवति तन्त्रतः।। १३ ।।** इति।।

अस्यार्थः-नित्यकाम्यस्वरूपैक्ये प्रागुक्तरीत्या प्रमाणसिद्धे, सतीति शेषः। विनियोगपृथक्त्वतः= प्रत्यवायपरीहारार्थं फलार्थमिति च विनियोगपृथक्त्वेन, फलार्थं= काम्यफलार्थं क्रियमाणेऽपि सन्ध्यावन्दनादौ नित्यं तन्त्रतो भवति एकस्मादेव प्रयोगात् प्रत्यवायपरीहारोऽपि भवतीत्यर्थः, न च फलार्थमेकानुष्ठानं नित्यार्थमन्यदनुष्ठानमिति फलद्वयार्थं द्विरनुष्ठानं, "एकस्य तूभयत्वे संयोगपृथक्त्व" न्यायेन 'दध्नेन्द्रियकामस्य जुहुयात्' इति फलार्थदद्ध्नैव नित्याग्निहोत्रवत् काम्यप्रयोगादेव नित्यसिद्धिः। नतु नित्यात् काम्यसिद्धिः। मुमुक्षोःफलान्तरकामना-विरहेण काम्यत्वमेव तं प्रति न संभवतीति न ततः काम्यफलसिद्धिः। नचैवं प्रत्यवायानुत्पत्तिकामनाविरहे काम्यादपि न नित्यसिद्धिरिति वाच्यम्, नित्यानुष्ठानाभावस्य प्रत्यवायहेतुत्वेन तदभावरूपनित्यानुष्ठानतः नान्तरीयकतया इच्छाविरहेऽपि तत्सिद्धिरिति भावः।। १३ ।।

**(अव)** ननु आज्ञाकैङ्कर्यवदनुज्ञाकैङ्कर्यस्यापि कैङ्कर्यत्वाविशेषादकरणे प्रत्यवायः स्यात् शास्त्रीयत्वाविशेषादित्यत्राह-

(शास्त्री-)

**अनुज्ञामात्रसिद्धेषु कैङ्कर्येषु विचक्षणैः।**

**अकृतौ तत्फलालाभो नतु दोष इतीरितः।। १४ ।।** इति ।।

अस्यार्थः-अनुज्ञामात्रसिद्धेषु = मालाकरणादिषु कैङ्कर्येषु विषये, अकृतौ तत्फलालाभ एव, नतु दोषः= प्रत्यवायःइति विचक्षणैः= शास्त्रविचक्षणैः ईरितः।। १४ ।।

## अपराधपरिहाराधिकारः।।

**(अव)**एवं प्रपन्नस्य शास्त्रीयनियममुक्त्वा तस्य धीपूर्वोत्तराघप्रवृत्तिरेव न घटते, यद्यपि पूर्वदुष्कृतात् घटते, 'अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत्। प्रायश्चित्तिरियं साऽत्र यत्पुनश्शरणं व्रजेत्।।'इति पुनश्शरणागतिरेव

प्रायश्चित्तिरित्युक्तं, ''न खलु भागवता यमविषयं गच्छन्ति'' इति श्रवणात् बुद्धिपूर्वोत्तराघप्रवृत्तावपि बाधकं नास्तीति प्रायश्चित्तं किमर्थम्? इत्याशङ्कायां, यद्यपि यमविषयगमनं नास्ति, भगवन्निग्रहो जायत एव, 'खञ्जा भवन्ति, काणा भवन्ति, अविधेयपुत्रा भवन्ति', इति निग्रहफलश्रवणात् निग्रहानुदयाय प्रायश्चित्तिरभिमतेत्यभिहितं; एवं तर्हि कृतोपायस्यापि भगवन्निग्रहविषयपुनस्सं-सारित्वापत्तिरित्याह-

**(अप-)** **न प्राग्वद् बुद्धिपूर्वाघे न चात्यन्तमनुग्रहः ।**
**लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत् ।। १५ ।।** इति ।।

अस्यार्थः- बुद्धिपूर्वाघे सति प्रायश्चित्ताकरणेऽपि न प्राग्वत्= अकृतोपायत्वावस्थायां धीपूर्वापराधे भवतो यथा नरकपातपर्यन्तनिग्रहोदयः न तथेत्यर्थः । न चात्यन्तमनुग्रहः, धीपूर्वाघरहितेषु कृतोपायेषु भगवतो यथा प्रसन्नता तथा नेत्यर्थः, किन्तर्हि भवतीत्याह-लघुरित्यादि । प्रपन्नस्य लघुर्दण्डः 'काणा भवन्ति' इत्यादिरूपः, न गुरुः राजपुत्रापराधवत् । राजपुत्रापराधे, सप्तम्यर्थे वतिः, यथा राजपुत्रेण धीपूर्वमेव द्रोहे कृतेऽपि न वधपर्यन्तो दण्डः, नापि प्राग्वत् बहुमानः । किन्तु भोगन्यूनताकरणम् । एवं प्रकृतेऽपीत्यर्थः । तस्मात् प्रपन्नस्य न पुनस्संसारित्व-प्रसक्तिरिति स्थितम् ।। १५ ।।

**(अव)** अथ भगवन्निग्रहफलस्य लघुदण्डादेरपि प्रसक्त्यभावाय यथा बुद्धिपूर्वापराधा न प्रसज्जेयुस्तथा तन्मूलोन्मूलनाय यतितव्यम्, तन्मूलश्च अविवेकः, शरीरात्मविवेकाभावे हि अचिद्धर्माणां स्थूलत्वकृशत्वजडत्वनाशित्वादीनां परमशेषिधर्मभूतस्वतन्त्रत्वस्वामित्व स्वनिष्ठत्वादीनां चात्मन्यारोपः ततश्च पशुपुत्रादौ ममताबुद्धिः । ततोऽर्थकामाग्रहविशिष्टत्वात् कामक्रोधलोभादिभिः परिभवः, ततः परहिंसादिकमित्यर्थकामापचारविजृम्भणं शाखानुशाखमिति तन्मूलभूताविवेक-निवर्तनाय विवेकादिः सम्पादनीयः; तत एव तेषां न पुनः प्ररोह इत्याह-

**(अप-)** **अविवेकप्रभुत्वादेर्निदानस्य निवर्तनात् ।**
**अर्थकामापचाराणामयत्नोन्मूलनं भवेत् ।। १६ ।।** इति ।।

अस्यार्थः- तत्त्वत्रयविवेकेनेत्यध्याहार्यम् । अविवेकस्य= विवेकाभावस्य मोहस्य तन्मूलकप्रभुत्वादेस्स्वतन्त्रत्वानन्याधारत्व -अनन्यार्थत्वादेः, आदिशब्देन प्रकृतिधर्माणां जडत्वनाशित्वादीनां च, निदानस्य= आदिकारणस्य निवर्तनात् । शिष्टं स्पष्टम् , अतोऽवश्यं विवेकिना भवितव्यम्; तत्रापि भागवतापचारादतीव भेतव्यं, "एवं मुक्तिफलानियमः" इत्यादौ कृतोपायोऽपि राजदारापराधसदृशभागवतापचारलेशादेव भ्रश्येदित्युपपाद्य, भागवतापचारलेशे कृते सति झटिति तत्क्षणक्षापणेन शुद्ध्येदित्यभिधाय, तथाच धीपूर्वोत्तराघे पुनःप्रपदनमेव प्रायश्चित्तम् इति ।। १६ ।।

**(अव)** ननु कथमिदं "निरवधिषु कृतेषु चागस्स्वहो मतिरनुशयिनी यदि स्यात् ततः वरद हि दयसे न संशेमहे निरनुशयधियो हता है वयम्, क्षाम्यस्यहो तदभिसन्धिविराममात्रात् ।" इतिच अनुतापाभिसन्धिविरामादीनामपि प्रायश्चित्तत्वाभिधानेन पुनः प्रपदनमेव निष्कृतिरिति घटत इत्याह-

**(अप-)**

**अनुतापादुपरमात् प्रायश्चित्तोन्मुखत्वतः ।**
**तत्पूरणाच्चापराधास्सर्वे नश्यन्ति पादशः ।। १७ ।।** इति ।।

अस्यार्थः- अनुतापात्; जानन्नप्यहं लोभादिना कथमिदमकरवं, मौख्यदिवं कृतं, भगवन्निग्रहस्य महतःपात्रमासं, शिष्टगर्हा चासीदित्यादिरूपात्, उपरमात् । एवंविधेषु दुष्कृत्येषु न कदाचिदुद्योगो मया कार्य इत्यभिसन्धिविरामात्, प्रायश्चित्तोन्मुखत्वतः, प्रायश्चित्तमद्यैव मया कार्यम् इति तदभिसन्धिविधानात् । तत्पूरणात्= प्रायश्चित्तस्य निर्वर्तनाच्च, सर्वे = बुद्धिपूर्वा अबुद्धिपूर्वाः गुरवो लघवश्चापराधाः, पादशः, नश्यन्ति, प्रथमद्वितीयांशक्रमेण निरवशेषं नश्यन्तीत्यर्थः ।। १७ ।।

**(अव)** ननु एवमेव प्रपदनं पापानां गुरूणां लघूनां सर्वेषामपि निष्कृतिर्हि भवति, तथा सति गुरुणि गुरुप्रायश्चित्तं, लघुनि लघ्विति स्मृतिर्विरुद्ध्यते । किञ्च-सर्वेषामेकमेवेति चेत् प्रायश्चित्तं- तदा लघुनाऽनेनैव सर्वेषां निवृत्तिसंभवे किम् तत्प्रतिपदोक्तप्रायश्चित्तसहस्रविधानेनेत्यत आह-

(अप-) पूर्वस्मिन् वा परस्मिन् वा कल्पे निर्विण्णचेतसाम्।
निवर्त्यतारतम्येऽपि प्रपत्तिर्न विशिष्यते।। १८ ।।

एवमेव लघूनां वा गुरूणामपि वाऽऽगसाम्।
सकृत्प्रपत्तिरेवैका सद्यः प्रशमकारणम्।। १९ ।। इति।।

अनयोरर्थः- अत्रैकं वाक्यं श्लोकद्वयं । आद्यश्लोके दृष्टान्तप्रदर्शनम् । द्वितीये दार्ष्टान्तकथनम् । पूर्वस्मिन् कल्पे; ब्रह्मकल्पे परस्मिन् वा ब्रह्मणः कल्पे निर्विण्णचेतसां, संसार इति शेषः। अकिञ्चनानां निवर्त्यतारतम्येऽपि=निवर्त्यानां= पापानां तारतम्येऽपि= संख्याया न्यूनाधिकत्वेऽपि प्रपत्तिः, पूर्वकल्पप्रपत्त्यपेक्षया, न विशिष्यते, सा यथैका सती बहूनां निवर्तिका तथोत्तरकल्पेऽपि प्रपत्तिरेकाऽस्ति निवर्तिकेति न विशिष्यते । पूर्वकल्पेऽनुष्ठिता प्रपत्तिःपरकल्पानुष्ठितप्रपत्त्यपेक्षया स्वल्पपापनिवर्तिका, अपरकल्पप्रपत्तिस्तुपूर्वप्रपत्त्यपेक्षया भूयिष्ठपापनिवर्तिकेति निवर्त्यतारतम्येऽपि एकरूपतया सा निवर्तकेति संप्रतिपन्नम्, एवमेव तद्वदेव गुरूणां लघूनां वा आगसां= अपराधानां, एका= भक्त्यादिसहायानपेक्षा असकृद्धत्तिवद् आवृत्तिरहिता, प्रपत्त्यन्तरानपेक्षेति भावः । प्रपत्तिरेव= पुनःक्रियमाणा प्रायश्चित्त-प्रपत्तिरेव प्रतिपदोक्तसहभावव्यावृत्त्यर्थमेवकारः, सद्यः=प्रयोगानन्तरक्षण एव, न कालान्तरे, प्रशमकारणम्= निश्शेषविनाशहेतुः । अतः प्रपत्तिः स्वमाहात्म्यादेव गुरुलघुसाधारण्येन धीपूर्वोत्तराघम् अखिलमपि निवर्तयतीति भावः । अत्र विश्वासाद्य-भाववद् अधिकारिविशेषविषयं प्रायश्चित्तान्तरविधानमित्यपि स्थितम् ।। १९ ।।

## अथ परिपूर्णब्रह्मानुभवाधिकारः।।

**(अव)** परिपूर्णब्रह्मानुभवः एवमपराधपरिहारं प्रतिपाद्य प्रपन्नस्य वासयोग्यं स्थानविशेषमप्यभिधाय शरीरवियोगसमये प्रपन्नस्य जीवस्य निर्याणप्रकारमुदी-र्यार्चिरादिकां गतिमपि सविस्तरमभिधाय परमपदे परिपूर्णब्रह्मानुभवरूपपरमपुरुषा-र्थप्राप्तिमपि कथयित्वा, ''लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये। अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः'' 'मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन । इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत'

इत्यादिसालोक्य-सारूप्य-सामीप्य सायुज्यशब्दानां श्रवणात् तत्र पूर्वेषां त्रयाणां न मोक्षत्वं, किन्तु सायुज्यमेव मोक्षः, सायुज्यं नाम-सयुजोर्भावः, सयुक्त्वं च एकस्मिन् भोग्यवस्तुनि भोक्तृत्वेन यत्र द्वयोरन्वयः तत्र उभौ सयुजौ, सयुजोर्भावः, सायुज्यं, सप्रकारब्रह्मरूपभोग्यवस्तुनि ब्रह्म च मुक्तश्च भोक्तारौ इति तावुभौ सयुजावित्यभिहितम् । एवं तर्हि 'एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति' इति श्रुतौ सायुज्य-सार्ष्टिताशब्दौ सह प्रयुक्तौ तन्न संभवति । सायुज्यसार्ष्टिताशब्दयोरेकार्थत्वात्, अर्ष्टिर्हि अशनं= भोग इति समानभोगत्वार्थकत्वादुभयोः इत्यत्राह -

**(परि-)**

**सायुज्यमुभयोरत्र भोक्तव्यस्याविशिष्टता ।**
**सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता ।। २० ।।** इति ।।

अस्यार्थः - अत्र= परमपदे, उभयोः= मुक्तब्रह्मणोः भोक्तव्यस्य= परिपूर्णब्रह्मरूपभोग्यस्य अविशिष्टता; अवैषम्यं; तत्र सार्ष्टिता; तत्र भोगस्य तारतम्यविहीनता, आनुकूल्यांशे वैषम्यलेशविहीनत्वं, यथा लोके भोक्तव्यक्षीरादेः अविशेषेऽपि कस्यचिदानुकूल्यातिशयात् प्रीतिरूपं सुखमस्ति, अन्यस्य मन्दानुकूल्यादल्पप्रीतिरूपमिति वैषम्यं दृष्टम्, तथा न प्रकृते, ब्रह्ममुक्तयोरानुकूल्यांशे विशेषाभावादिति भावः । तथा च सायुज्यादन्यदेव सार्ष्टित्वमित्यपुनरुक्तिरिति स्थितम् ।। २० ।।

* * *

## अथ स्थिरीकरणभागे सिद्धोपायशोधनाधिकारः ।।

**(अव)** अथ स्थिरीकरणभागे सिद्धोपायस्वरूपविचारस्तावदुपक्रान्तः, तत्र सर्वेश्वरस्सर्वरक्षकः स्वयमेव रक्षिष्यतीति तूष्णीमयत्नेन स्थितिरस्माकं युक्ता । न तदर्थमस्माभिर्व्यापारि(रयि)तव्यम् । स्तनन्धयो यथा नात्मसमर्पणं स्वयं करोति तथाऽसौ स्वयत्नविरहितस्तिष्ठतु, 'ये नाथवन्तो हि भवन्ति लोके ते नात्मकर्माणि समारभन्ते। तेषां हि कार्येषु भवन्ति नाथाः' इत्यादिषु नाथवतां निर्व्यापारत्वं स्वामिनामेव रक्षणार्थं व्यापार इत्यपि दृष्टमिति वदतां केषाञ्चिदभियुक्तानां वचनमन्यपरं, तथाहि - प्रपत्तिविधायकशास्त्रं दृष्ट्वा न्यस्तरक्षाभरस्य पश्चात्

स्वरक्षणार्थव्यापारे नान्वयः पूर्वमपि स्वरक्षणार्थव्यापारोऽपि भगवदिच्छाप्रवर्तितया-दृच्छिकसुकृतादिद्वारकतया भगवदधीनः, नत्विह स्वयमेव स्वरक्षणार्थस्वव्यापारं कृतवानिति युक्तं स्थातुमिति तत्परं तद्वचनमित्याह-

**(सिद्धो-)**

**यदर्थं तु कृतो न्यासस्तदर्थं न पुनः क्रिया ।**
**पूर्वमप्यपराधीनप्रवृत्तावस्य नान्वयः ।। २१ ।।** इति ।।

अस्यार्थः- यदर्थं = आत्मरक्षार्थं, न्यासः = भरन्यासः कृतः, तदर्थं= स्वरक्षणार्थं, न पुनः क्रिया=व्यापारः कर्तव्यः, भरन्यसनात् पूर्वमप्यपराधीनप्रवृत्तौ, स्वेच्छाधीनस्वरक्षार्थस्वाधीनप्रवृत्तौ, अस्य=मुमुक्षोः नान्वयः । भरन्यासाद् ऊर्ध्वं तावत् निर्यत्नेन स्थातव्यमेव; ततः पूर्वं तु यद्यपि स्वरक्षणार्थं भरन्यासादावी-श्वराधीनप्रवृत्तिरस्ति, तथाऽप्यपराधीनप्रवृत्तावनन्वयात् न मम कुत्रापि कर्तृत्वान्वय इत्यनुसन्धानमेव युक्तमिति अभियुक्तानां हृदयम् । अन्यथा तेषां सर्वमुक्तिप्रसङ्गः प्रपत्तिशास्त्रादिवैयाकुली च स्यात् । 'ये नाथवन्तः' इत्यादिवचनस्याप्यन्यथैवार्थ इति योज्यम् ।। २१ ।।

**(अव)** ननु? 'मामेकं शरणं व्रज'इत्येकपदस्वारस्यात् सिद्धोपायस्य उपायान्तरनैरपेक्ष्यं स्पष्टम् । तत्प्रपत्त्यनुष्ठाने विरुद्ध्यते । भगवदेकोपायत्त्वानु-सन्धानमेव हि मुमुक्षोरावश्यकम् । मुमुक्षुश्च प्रपत्तौ प्रवर्तमानस्तदुपायत्वं बुद्ध्यत एवेति तद्विरोधः, किञ्चासावात्मनि कर्तृत्वमनुसन्दधानः कथमीश्वर एव कर्ता नाहमित्यद्ध्यवस्येत्, अतः स्वकर्तृत्वानन्वय इत्यनुसन्धानमेव युक्तमिति पूर्वोक्तमप्यनुपपन्नमित्याह-

**(सिद्धो-)**

**स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।**
**स्वदत्तस्वधिया स्वार्थं स्वस्मिन् न्यस्यति मां स्वयम् ।। २२ ।।** इति ।।

अस्यार्थः- स्वामी; शेषी, स्वशेषं स्ववशं मां= स्वपरतन्त्रं मां, स्वदत्त स्वधिया = स्वदत्तया स्वकीयया धिया, स्वार्थं= स्वप्रयोजनाय, स्वस्मिन् =

आत्मनि स्वयं ; स्वयत्नेनैव, स्वभरत्वेन निर्भरं यथा भवति तथा न्यस्यति, मम यथा निर्भरत्वं भवति तथा स्वभरत्वेन न्यस्यति । भरशब्दोऽयं रक्षाभरार्थः, स्वभरत्वेन स्वीकारात् निर्भरं मां न्यस्यतीति वा योजना। स्वामी स्वशेषमिति स्वरूपसमर्पणं, स्वभरत्वेन निर्भरमिति रक्षाभरस्य, स्वार्थमिति फलस्य, आहत्य त्र्यंशसमर्पणं विवक्षितम् । स्वार्थमित्यनेन फलसङ्गत्यागः, स्वयं स्वस्मिन् न्यस्यतीति कर्तृत्वत्यागः, निर्भरमित्यनेन रक्षाभरांशे स्वस्यानन्वय उक्तः, स्ववशमिति स्वस्मिन् स्वस्य स्वातन्त्र्यविरहः, भवद्दत्ता बुद्धिरपि न मदीया,किन्तु-तस्यैवेति तत्र ममतात्यागः । स्वधियेति। सा च धीर्मयैवार्जितेति दुरभिमानव्यावृत्तये स्वदत्तेति एवमनुसन्दधान । एव भरन्यासमाचरतीति न किञ्चिदप्यवद्यम्।। २२ ।।

**(अव)** एवं नारायणशब्दार्थगुणसम्बन्धमूलकसिद्धोपायविषयक-चोद्यनिरासानन्तरं तत्रैव द्वये श्रीमच्छब्दप्रतिपाद्यश्रीविशेषणत्वविषयचोद्यमपि गुणविशेषणत्वप्रतिबन्दिमुखेन परिहरिष्यन् गुणानां लक्ष्म्याश्च प्रपित्सूनां रक्षोपयोगं दर्शयन् प्रथमश्लोके गुणानां विशेषणत्वं प्रतिपादयति-

**(सिद्धो–)**

**भरस्वीकाररहितं रक्षासङ्कल्पवर्जितम् ।**
**गुणादिकमिहेष्टं हि शरण्यस्य विशेषणम् ।। २३ ।।** इति ।।

अस्यार्थः- भरस्वीकाररहितं रक्षासङ्कल्पवर्जितम् ज्ञानशक्तिकरुणा, क्षमा, सौशील्य-वात्सल्यादिगुणजातं, आदिशब्देन विग्रहवत्त्वञ्च, न्यासविद्योपयोगितया तत्तत्प्रमाणसिद्धम् शरण्यस्य= भगवतः विशेषणमिष्टं हि । अयमाशयः- ज्ञानं तावत् भगवतः स्वाश्रितानां दोषगुणाद्यवधारणे उपयुज्यते, शक्तिः तद्दोषनिवर्तकत्वे, करुणा निरुपाधिपरदुःखप्रहापणे, क्षमा अपराधसहने, सौशील्यं परत्वबुद्ध्याऽ-नुपसर्पणीयत्वबुद्धिनिरासे, वात्सल्यं स्वदोषानुसन्धानेन स्वस्य रक्षानर्हत्वशङ्कानिरासे, स्वामित्वं स्वपदार्थस्यावश्यरक्ष्यत्वाध्यवसाये, एवमन्येऽपि गुणास्तत्तदुपकार - मुखेनोपयुक्ताः । एवं विग्रहेऽपि। तथाच तत्तदुपयोगानुसारेण गुणादेरिष्टं हि विशेषणत्वं, अचेतनत्वात्तु रक्षाभरस्वीकाररक्षाभरसङ्कल्पौ न स्त इति।। २३ ।।

**(अव)** अथ लक्ष्म्या भरस्वीकाररक्षासङ्कल्पौ गुणाद्यपेक्षया अधिकौ उपयोगविशेषौ स्त इति तस्याः विशेषणत्वे का विप्रतिपत्तिरित्याशयादाह-
**(सिद्धो-)**

**ऐकरस्यजुषोश्शेषिदंपत्योस्सर्वकर्मसु ।**
**विशेषणविशेष्यत्वं श्रुतं कस्मान्न रोचते ।। २४ ।।** इति ।।

अस्यार्थः- सर्वकर्मसु ;सृष्टिस्थितिसंहारादिलीलासु,मोक्षोपायविद्या - वेद्यत्वसर्वफलप्रदानादिषु च । ऐकरस्यजुषोः- एको रसः= प्रीतिर्ययोस्तौ एकरसौ, तयोर्भावः ऐकरस्यं, तज्जुषोः तत्सेवेत इति,तज्जुषोः भक्तानुग्रहेऽपि ऐकमत्यं प्राप्तयोः। एतेन देव्या उपयोगविशेषः मोक्षप्रदाने भगवदनुमन्तृत्व-भरस्वीकर्तृत्वरक्षासङ्कल्पादिरूपो दर्शितः । श्रुतं च - द्वये श्रीमच्छब्दे मतुप्प्रत्यय-श्रुत्याऽवगतं विशेषेणविशेष्यत्वं भगवतो विशेष्यत्वमस्याश्च विशेषणत्वं, यथा सपत्नीक एव विष्णुशर्मा यजते, ददाति, जुहोतीत्युक्ते पत्न्यास्तत्सहकारित्वेनो-पयोगेन विशेषणत्वं तद्वदिति भावः। कस्मान्न रोचते; कस्माद्धेतोः? तत्किं प्रमाणाभावात्, उत "मामेकम् " इत्युक्तोपायैक्ये विरोधात्, आहोस्वित् उपयोगविरहात् , नाद्यः-'सा नो लोकममृतं ददातु' 'श्रियं वसानाऽमृतत्त्वमायन्' 'यामालम्ब्य सुखेनेमं दुस्तरं त्रिगुणोदधिम् । निस्तरन्त्यचिरेणैव व्यक्तं ध्यानपरायणाः' 'अकळङ्कामृताधारा ज्योतिष्मत्यमृतावहा । आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी' 'भोगदा मुक्तिदायिनी', इत्यादिप्रमाणान्तरदर्शनात् । न द्वितीयः-गुणानां विशेषणत्वाभावप्रसङ्गात् । न तृतीयः- उपयोगस्य प्रागेव दर्शितत्वादिति भावः।। २४ ।।

**(अव)** तथापि चेतनस्य विशेषणत्वं न क्वापि वेदान्तविद्यासु प्रसिद्धम्, अतः कथमस्या विशेषणत्ववाचो युक्तिरित्यत्राह-
**(सिद्धो-)**

**प्रतर्दनादिविद्यासु वेद्येऽपि परमात्मनि ।**
**अचेतनवदिच्छामश्चेतनं च विशेषणम् ।। २५ ।।** इति ।।

अस्यार्थः- 'यं त्वं मनुष्याय हिततमं मन्यसे' इति पृच्छन्तं प्रतर्दनं प्रति, 'तं मामायुरमृतमित्युपास्स्व' इति इन्द्रेण स्वशरीरकपरमात्मोपासनं हि विहितं, तादृशप्रतर्दनादिविद्यासु परमात्मनि विशेष्यतया वेद्येऽपि अचेतनवत्= प्राणवत्, अन्तरादित्यविद्यादौ आदित्यमण्डलादिस्थानमचेतनमपि यथा विशेषणं एवं चेतनमपीन्द्रादिकं विशेषणमिच्छामः, तद्वच्छ्रियोऽपि विशेषणत्वे किं बाधकमिति भावः ।। २५ ।।

**(अव)** उक्तमर्थमुपसंहरन् प्रपत्तिविद्यावेद्यत्वे देव्याः करणमन्त्र - प्रतिपाद्यत्वमपि हेतूकरोति -

**(सिद्धो-)**

**इत्थं प्रपत्तिविद्यायां तत्तन्मन्त्रानुसारतः।**

**विभुः पत्न्या गुणाद्यैश्च विशिष्टो विषयोऽत्र नः ।। २६ ।।** इति ।।

अस्यार्थः- इत्थं= उक्तप्रकारेण, न्यायोपबृंहणवचनैः अत्र= प्रपत्तिविद्यायां तत्तन्मन्त्रानुसारतः, 'ओमित्यात्मानं युञ्जीत' इति करणमन्त्रतया विनियुक्त-प्रणवेऽपि उकारो लक्ष्मीवाचक इति उभयोरात्महविस्संप्रदानत्व -प्रकाशनमूल-मन्त्रेऽपि प्रणवार्थान्वयस्य तुल्यत्वात् द्वये च कण्ठोक्तत्वात् ''श्रीमन्नारायण-'' इत्यादौ श्रीमत्त्वश्रुतेः, एवमन्यत्रापि दृष्टव्यम् । विभुः= सर्वेश्वरः पत्न्या= गुणाद्यैश्च विशिष्ट एव नः= अस्माकं प्रपन्नानां विषयः= प्रपत्तिविद्या वेद्यः । एवं श्रीमन्नारायणः सिद्धोपायः, न तु गुणविग्रहलक्ष्मीपृथक्कृत इति स्थितम् ।। २६ ।।

**(अव)** ननु? किं तावत् सिद्धोपायत्वं? फलसिद्धेः प्राक्काले सिद्धत्वे सति उपायत्वं चेत् - भक्तिप्रपत्त्योरपीदं तुल्यमित्यत आह-

**(सिद्धो-)**

**समस्तपुरुषार्थानां साधकस्य दयानिधेः।**

**श्रीमतःपूर्वसिद्धत्वात् सिद्धोपायमिमं विदुः।। २७ ।।** इति।।

अस्यार्थः- समस्तपुरुषार्थानां= धर्मार्थकाममोक्षाणां साधकस्य । एतेनोपायत्व-प्रयोजकं सामर्थ्यमस्तीत्युक्तं भवति । कार्यसाधनसमर्थत्वमपि निष्करुणत्वे व्यर्थमित्यत

आह - दयानिधेरिति । दयोत्तंभकपुरुषकारविरहे पुनस्सदोष इत्यत आह- श्रीमत इति, पुरुषाकारत्वेन उपायकोट्यन्वितत्वेन च श्रीवैशिष्ट्यं मतुपा विवक्षितमिति भावः । पूर्वसिद्धत्वात्, पुरुषकृतेः पूर्वमेव सिद्धत्वात्, इमं; श्रीविशिष्टं दयादिगुण-विशिष्टं च भगवन्तं सिद्धोपायं विदुः ।। २७ ।।

**(अव)** भक्तिप्रपत्त्यादीनां पूर्वसिद्धत्वाभावात् पुरुषकृतिसाद्ध्यत्वेन साद्ध्योपायशब्दवाच्यत्वमिति वदन् साद्ध्योपायप्रयोजनमप्याह-

**(सिद्धो-)**

**भक्तिप्रपत्तिप्रमुखं तद्वशीकारकारणम् ।**

**तत्तत्फलार्थिसाद्ध्यत्वात् साद्ध्योपायं विदुर्बुधाः ।। २८ ।। इति ।।**

भक्तिप्रपत्तिप्रमुखं इत्यत्र प्रमुखशब्देन कर्मयोग ग्रहणमिति श्रीसारदीपिकायां व्याख्यातम् ।

अस्यार्थः - भक्तिप्रपत्तिप्रमुखं,प्रमुखशब्देन उपासनं प्रपत्तिभेदाः विवक्षिताः, तद्वशीकारकारणं; तस्य= भगवतःवशीकारे कारणं, तत्तत्फलार्थिसाद्ध्यत्वात्= तत्तत्फलार्थिपुरुषकृतिसाद्ध्यत्वात्, साद्ध्योपायं बुधाः विदुः, भगवद्वशीकरणप्रणाड्या फलसाधनत्वाद् उपायत्वं, तत्तदधिकारिकृतिसाद्ध्यत्वात् साद्ध्यत्वमिति भावः ।। २८ ।।

**(अव)** ननु? भक्त्यादीनां तद्वशीकारकारणत्वेऽपि भक्तिप्रपत्तिवशीकृतस्य ईश्वरस्य लीलाप्रवाहः केन निरोद्धुं शक्यते, कथं वा सत्यसङ्कल्पस्य स्वतन्त्रस्य सङ्कल्पाः संसार एवैतान् भ्रामयेयमितिरूपाः भक्त्यादिना निवर्तनीया इति शङ्काद्वयं श्लोकद्वयेन परिहरति-

**(सिद्धो-)**

**साद्ध्योपायोत्तरङ्गेण सिद्धोपायस्य शेषिणः ।**

**लीलाप्रवाहः कारुण्यप्रवाहेण निरुद्ध्यते ।। २९ ।।**

**तेनैव सर्वे लीयन्ते सिकतासेतुबन्धवत् ।**

**स्वतन्त्रस्यापि सङ्कल्पाः स्वकैङ्कर्यनिरोधकाः ।। ३० ।। इति ।।**

अनयोरर्थः- सिद्धोपायस्य= शेषिणः लीलाप्रवाहः साध्योपायोत्तरङ्गेण; भक्तिप्रपत्त्यादिसाध्योपायानुष्ठानतः उत्तरङ्गेण, लीलाप्रवाहाभिभावकशक्तिरेव तरङ्गशब्देन विवक्षिता, उद्गतः तरङ्गः यस्य सः, प्रपत्त्याद्यनुष्ठानाद् उद्भूतशक्तिकेनेत्यर्थः । कारुण्यप्रवाहेण निरुद्ध्यते । यथा समुद्रस्य चन्द्रोदयानन्तरं उत्तरङ्गस्य नदीप्रवाहनिरोधकत्वं तथेति भावः तेनैव= कारुण्यप्रवाहेणैव, स्वकैङ्कर्यनिरोधकाः= मोक्षप्रतिबन्धकाः सर्वे स्वतन्त्रस्य सङ्कल्पा अपि पूर्वं लीलाप्रवाहो नश्यतीत्युक्तं, तेन समुच्चयोऽपिशब्दार्थः। स्वतन्त्रस्यापीति विरोधसूचको वा। स्वातन्त्र्ये सत्यपि स्वातन्त्र्यं करुणाप्रवाहेण दूरीकृतं सिकतासेतुबन्धवल्लीयते, यथा महाप्रवाहेण सैकतास्सेतवो नश्यन्ति तथेति भावः ।। ३० ।।

**(अव)** ननु? भगवानुपाय इत्युक्तं, स च भक्तिप्रपत्त्यादिविरहेण न फलाय कल्पते, सर्वमुक्तिप्रसङ्गात्, तथाच साध्योपायावश्यकत्वेनान्वयव्यतिरेकाभ्यां साध्योपाय एव प्रधानोपायः, कृतं सामान्यकारणस्य भगवतः प्रधानोपायत्वाश्रयणेन; तत्राह-

**(सिद्धो-)**

**प्रसादनस्योपायत्वे शास्त्रीयेऽपि फलं प्रति ।**
**कर्तृत्वाव्यवधानाद्यैस्सिद्धोपायप्रधानता ।। ३१ ।। इति ।।**

अस्यार्थः- प्रसादनस्य= प्रसादजनकस्य भक्त्यादेः, फलं प्रति = मोक्षादिकं प्रति उपायत्वे = हेतुत्वे, शास्त्रीयेऽपि= शास्त्रविहितेऽपि । शास्त्रं हि यागादीनां क्षणिकानामपि व्यापारवत्तया कालान्तरभाविफलजनकत्वबोधकं, तथेहापीति भावः। कर्तृत्वाव्यवधानाद्यैः सिद्धोपायप्रधानता, इच्छापूर्वककृत्याश्रयत्वरूपकर्तृत्वाश्रयत्वात् प्रसन्नस्य भगवतः प्रति अव्यवधानेन साधकत्वाच्च, स्वसङ्कल्पाधीनसाद्ध्योपायत्वाच्च सिद्धोपायस्यैव प्रधानता युक्तेति यावत् ।। ३१ ।।

**(अव)** ननु? स्वतन्त्रप्रपत्तिनिष्ठानां भगवदेकनिष्ठत्वं विशेषत उच्यते, तद्व्यर्थं, सिद्धसाध्योपायनिष्ठत्वस्यैव युक्तत्वादित्यत आह-

**(सिद्धो–)**

**स्वतन्त्रन्यासनिष्ठानां सिद्धोपाये विभौ स्थितिः ।**

**क्षणात् (पश्चात्)स्वयत्नविरतिव्यक्त्यै प्रोक्ता विशेषतः ।। ३२ ।। इति ।।**

अस्यार्थः- स्वतन्त्रन्यासनिष्ठानां, भक्त्यङ्गतया विहितप्रपत्तिः अङ्गप्रपत्तिः, तन्निष्ठानां भक्तानां व्यावृत्तये-स्वतन्त्रपदं, भक्तानां हि उपायान्तरस्थाने भगवन्निवेशनाभावात् शक्तत्वाच्च प्रपन्नानामिव न भगवदेकोपायत्ववरणेन स्वयत्नविरतिरिति भावः। सिद्धोपाये विभौ; शेषिणि स्थितिः= पर्यवसानं, तदेकनिष्ठत्वमिति यावत्, क्षणात् स्वयत्नविरतिव्यक्त्यै; प्रपत्त्यनुष्ठानक्षणादूर्द्ध्वं सद्य एव स्वयत्नाद्विरतिः, स्वव्यापारनिवृत्तिः तद्व्यक्त्यै तत्ख्यापनाय, विशेषतः= असाधारण्येन, प्रोक्ता, पूर्वाचार्यैरिति शेषः । अयं भावः- प्रपद्यमानेन सिद्धोपाये हि भरन्यासः कर्तव्यः, पश्चात्तु तेन निर्भरेण भवितव्यम्। निर्भरत्वं नाम तदर्थं स्वस्य पुनःपुनः व्यापारानन्वयः, तत्सिद्धये भगवदेकनिष्ठत्वमाचार्यैः प्रादर्शि । अन्यथा भक्तवत् स्वव्यापारेऽपि पुनःपुनः प्रवर्तत इति भावः ।। ३२ ।।

**(अव)** ननु? एवं भगवदाराधनगुरुशुश्रूषादिव्यापारेभ्योऽपि कुतो न विरमेदित्यत्राह-

**(सिद्धो–)**

**अतो यदर्थं स्वभरस्सिद्धोपाये निवेशितः ।**

**तदर्थं शान्तयत्नोऽसौ सिद्धोपायं प्रतीक्षते ।। ३३ ।। इति ।।**

अस्यार्थः- अतः= सिद्धोपायैकनिष्ठत्वाभिधानात् यदर्थं= मोक्षार्थं , स्वभरः=स्वरक्षाभरः,सिद्धोपाये= भगवति निवेशितः, तदर्थं=मोक्षार्थं शान्तयत्नः= त्यक्तस्वप्रयत्नः, असौ = मुमुक्षुः सिद्धोपायं प्रतीक्षते; तद्रक्षणावसरप्रतीक्षणमात्रं कुर्वन् वर्तते, न त्वाज्ञानुज्ञाकैङ्कर्यानुकूलप्रयत्नपराङ्मुखोऽपि भवेदिति भावः।।३३।।

**(अव)** ननु ? भगवतः मोक्षं प्रत्यसाधारणोपायत्वमस्तीति चेत् तदा सिद्धोपायत्वं वाच्यं, ततस्तदेकनिष्ठता च; तदेव कुतः? क्वचित् तद्धेतुत्वश्रवणं कालादिसाधारण्येन सामान्यकारणत्वपरमित्यत्राह-

**(सिद्धो-)**

**प्रपत्तेर्लक्षणे मन्त्रे विधौ वाक्यान्तरेषु च ।**

**भाष्यादौ सम्प्रदाये चोपायत्वं ब्रह्मणि स्थितम् ।। ३४ ।।**

अस्यार्थः - प्रपत्तेर्लक्षणे 'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्। तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः' इत्यादिप्रपत्तिलक्षणवाक्ये । प्रपत्तेर्मन्त्रे; द्वये, 'उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् । वर्तते, साम्प्रतं त्वेष उपायार्थैकवाचकः ।।' इति व्युत्पादितशरणशब्दोपश्लेषात् भगवच्चरणयोरुपायत्वप्रतिपादकत्वं द्वयस्येति भावः । प्रपत्तेर्विधौ; 'मामेकं शरणं व्रज'इति विधायकवाक्ये । वाक्यान्तरेषु 'ग्रसेत् संहारसमये जगच्च बदराण्डवत् । लीलया यस्तु भगवान् तं गच्छ शरणं हरिम् ।।' इत्याप्तोपदेशवाक्ये, 'राघवं शरणं गतः' इत्यादिषु वा । भाष्यादौ 'उपपत्तेश्च' इति सूत्रभाष्ये प्राप्यस्य परमपुरुषस्य स्वप्राप्तये स्वस्यैवोपायत्वोपपत्तेः ''नायमात्मा प्रवचनेन लभ्यः, न मेधया, न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् इत्याद्यनन्योपायत्वश्रवणात्'' । आदिशब्देन 'त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये' इत्यनुष्ठानप्रकाशकगद्यादावित्यर्थः । सम्प्रदाये च; அகலகில்லேன் इत्यादिद्रविडब्रह्मसंहितामूलिकाभिः ''उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ'' इत्याद्याचार्यश्रीसूक्तिभिर्विशदीकृतसंप्रदायपारम्पर्ये च, ब्रह्मणि= श्रीमन्नारायणे; उपायत्वं= प्रधानोपायत्वं, स्थितं= पर्यवसन्नम् ।। ३४ ।।

**(अव)** ननु? 'अथातो धर्मजिज्ञासा' 'चोदनालक्षणोऽर्थो धर्मः' इति कृतिसाध्यालौकिकश्रेयस्साधनत्वं धर्मत्वमिति सिद्धत्वात्, सिद्धस्य भगवतो धर्मत्वं दुर्वचम् । अतः 'कृष्णं धर्मं सनातनम्' इति वचनविरोधः । यदिच सिद्धस्य तस्य धर्मत्वमुच्यते, तदा द्वादशलक्षण्यां भगवतोऽपि धर्मत्वाभिधानं स्यादित्यत आह-

**(सिद्धो-)**

**पूर्वसिद्धस्य देशादेर्धर्मत्वं यद्वदिष्यते ।**

**एवं तत्त्वविदः प्राहुः कृष्णं धर्मं सनातनम् ।। ३५ ।। इति ।।**

अस्यार्थः- पूर्वसिद्धस्य= कृतेः पूर्वमेव सिद्धस्य कृतिसाध्यत्वाभावे अपि, देशादेः; 'समे यजेत'। 'सायं जुहोति' इत्यादिविहितदेशकालादेः, आदिशब्देन "द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते" इति भट्टाचार्योक्ताः द्रव्यक्रियागुणादयोऽत्र परामृश्यन्ते। धर्मत्वं-केवलमलौकिकश्रेयस्साधनत्वरूपं, नतु कृतिसाध्यत्वविशेषितं, गौरवात्, देशादौ अव्याप्तेश्चेति भावः। एवम् उक्तरीत्याऽलौकिकश्रेयस्साधनत्वरूप-धर्मलक्षणसंभवेन, तत्त्वविदः = कबन्धमीमांसकव्यतिरिक्ता वेदान्तार्थतत्त्वज्ञाः, कृष्णं सनातनं= अनादिसिद्धं, धर्मं प्राहुः। अत एव च द्वादशलक्षण्यां देवताकाण्डशिरस्कायां साध्यधर्म इष्टापूर्तादिः ब्रह्मकाण्डे कृष्णाख्यो धर्मस्सिद्ध एव विचारितः। अत एव 'अथातो धर्मजिज्ञासा' इत्यारभ्य, 'अनावृत्तिश्शब्दात्' इत्यन्तं विंशतिलक्षणमेकं शास्त्रमभ्यधायि। तस्मात् साध्योपायवशीकृतः अभीष्टफलप्रद इति स्थितम्॥ ३५॥

* * *

## अथ साध्योपायशोधनाधिकारः॥

**(अव)** अथ भक्तिप्रपत्त्यादिसाध्योपायापरिज्ञाने परिज्ञातोऽपि सिद्धोपायः अकिञ्चित्कर इति साद्ध्योपायस्य प्रपदनस्य च स्वरूपमवश्यविचारणीयमिति प्रतिज्ञाय, प्रपत्तेः केचित् त्रैवर्णिकाधिकारत्वं वैदिकविद्यात्वादिति वदन्तीति पूर्वपक्षमुत्थाप्य, शूद्रादिना न कर्तव्या सेति विशेषनिषेधाभावेन 'प्रपत्तिं तां प्रयुञ्जीत' इत्यादिसामान्यवचनस्य त्रैवर्णिकपरत्वेन सङ्कोचनानर्हत्वात् स्त्रीशूद्रादीना-मप्यधिकारस्य श्रीसात्वतादिषु कण्ठोक्तेश्च त्रैवर्णिकत्वात्रैवर्णिकत्वे न्यासविद्यायां नाधिकारिविशेषणे इति प्रपत्तियोग्याधिकारोक्तमेव स्मारयति-

**(साद्ध्यो-)**

**अतस्त्रैवर्णिकत्वादेर्भावोऽभावोऽपि कस्यचित्।**
**नाधिकारः प्रपत्तेस्स्यादाकिञ्चन्यमनाश्रितः॥ ३६॥ इति॥**

अस्यार्थः-अतः= सङ्कोचकाभावात्, त्रैवर्णिकत्वादेः= ब्राह्मणक्षत्रिय-वैश्यान्यतमत्वादेः, आदिशब्देन पुंस्त्वादिविवक्षा, भावः; सद्भावः, अभावः अपि;

त्रैवर्णिकत्वाभावश्च, कस्यचित् = प्रपित्सोः अकिञ्चन्यमनाश्रितः= अकिञ्चन्ये अपर्यवसितस्सन्, प्रपत्तेरधिकारो न स्यात् । त्रैवर्णिकस्य त्रैवर्णिकत्वभावोऽप्यधिकारो न, शूद्रस्य तदभावोऽप्यधिकारो न, किन्तु आकिञ्चन्यमेवाधिकार इति भावः ।। ३६ ।।

**(अव)** एवमधिकारविषये शङ्काक्षोभमपनीय, प्रपत्तिस्वरूपविषये तावत् क्षोभं शमयितुं 'त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ।।' 'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः ।।' इति क्वचिदुपायत्वप्रार्थनाया अङ्गित्वं प्रतीयते,'नारायणं सलक्ष्मीकं प्राप्तुं तच्चरणद्वयम् । उपाय इति विश्वासो द्वयार्थश्शरणागतिः ।।' इति विश्वासस्य क्वचिदङ्गित्वं, 'निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः' इत्यादावात्मनिक्षेपस्य क्वचिदङ्गित्वमिति प्रपत्तिस्वरूपविषये क्षोभमुत्थाप्य 'अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति ।। आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते ।। तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता । केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते' ।। 'न्यासः पञ्चाङ्गसंयुतः' इत्यादिबहुप्रमाणबलात् आत्मनिक्षेप एव अङ्गी, इतरत्राङ्गित्ववादः प्राधान्यद्योतनार्थ इत्युक्त्वा, हविस्समर्पणमेव हि याग इत्युच्यते, याग एव खल्वङ्गी, तथा च देवतामुद्दिश्यात्महविस्समर्पणरूपोऽयं याग एवाङ्गीति वैदिकमर्यादानुगुणश्चेत्यभिधाय, तदप्यात्मस्वरूपसमर्पणं भक्त्यादावतिव्याप्तं, मोक्षव्यतिरिक्तसकलफलार्थिप्रपत्तिषु अव्याप्तं, अतो न तदङ्गि । किं तु भरन्यास इत्युक्तं, ननु? ज्योतिष्टोमादौ हविस्समर्पणे सति रक्षाभरसमर्पणाभावादत्रापि तत्किमर्थमङ्गित्वेनाद्रियते? किञ्च यस्य शास्त्रस्य यस्सम्प्रदायः तेनैव व्यवहर्तव्यः, नतु शास्त्रान्तरन्यायेन शास्त्रान्तरसंप्रदायप्रसङ्ग इत्याह-

**(साद्ध्यो-)**

**हविस्समर्पणादत्र प्रयोगविधिशक्तितः ।**
**आत्मरक्षाभरन्यासोऽकिञ्चनस्यातिरिच्यते ।। ३७ ।। इति ।।**

अस्यार्थः- अत्र; प्रपत्तिप्रकरणे, आत्मरक्षाभरन्यासः, अकिञ्चनस्य प्रपित्सोः, हविस्समर्पणात्; सर्वप्रयोगसाधारणात्, अतिरिच्यते= अधिको भवति, कुतः? प्रयोगविधिशक्तितः; प्रयोगविधिसामर्थ्यात्, प्रयोगप्रकारविधायको विधिः, प्रयोगविधिः, स तावत्- ''आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेःपदे । उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्त्य च'' ।। इति, प्रयोगविधिस्तु - 'हविर्गृहीत्वाऽऽत्मरूपं वसुरण्येति मन्त्रतः । जुहुयात् प्रणवेनाग्नावच्युताख्ये सनातने' इति अत्र वचनद्वये आत्मात्मीयभरस्य सर्वस्य निक्षेपविधानात्, यागान्तरेषु भरन्यासाभावादितरयागापेक्षया अत्र यागे भरन्यासोऽधिको भवतीत्यर्थः। यद्यपि प्रथमवचने आत्मात्मीयभरन्यासः कण्ठोक्तः- द्वितीये तु न प्रतीयते। तथाऽपि प्रणवस्यात्महविस्समर्पणे करणमन्त्रतया विनियोगात्तत्र चाकारवाच्ये मकारवाच्यस्य समर्पणप्रतीतेः, अकारस्तावत् 'अव रक्षणे' इति धातौ व्युत्पन्न इति रक्षके स्वात्मानमर्पयामीति स्वानुसन्धानाद्रक्षकपदसामर्थ्याद्रक्षाभरन्यास आर्थो वाच्य इति वदन्ति ।। ३७ ।।

**(अव)** ननु? आत्मरक्षाभरन्यासः प्रपत्तिरिति भवद्भिरुच्यते, श्रीराममिश्राद्यैश्च स्वयत्ननिवृत्तिरेव प्रपत्तिरिति वर्ण्यते, अतस्तद्विरोध इत्यत्राह -

**(साद्ध्यो-)**

**अतः श्रीराममिश्राद्यैर्भरन्यासविवक्षया ।**
**स्वप्रवृत्तिनिवृत्त्यंशः प्रपत्तिरिति लक्षितः ।। ३८ ।।** इति ।।

अस्यार्थः- अतः, पूर्वोक्तबहुप्रमाणैर्भरन्यास एव प्रपत्तिरिति स्थापनात्, श्रीराममिश्राद्यैः, भरन्यासविवक्षया; भरन्यासतात्पर्येण, स्वप्रवृत्तिनिवृत्त्यंशः, स्वव्यापारनिवृत्त्यंशः, प्रपत्तिरिति लक्षितः । अयमाशयः-प्रवृत्तिमात्रत्यागो जीवतो न शक्यः, नापि नित्यनैमित्तिकादिकर्मत्यागः, अलेपकमताविशेषापत्तेः, किन्तु- भगवद्व्यतिरिक्तेभ्य उपायान्तरेभ्यो व्यावृत्तिरिति वाच्यम्, तादृशव्यावृत्तिश्च भगवदेकोपायत्वं, तत् न्यस्तभरत्वं विना नोपपद्यत इति स्वव्यापारत्यागो

भरन्यासव्याप्य एव भवति, यत्र स्वव्यापारत्यागः तत्र भरन्यास इति, अतः तद्विवक्षया स्वयत्नत्त्यागः प्रपत्तिरित्युक्तमिति ।। ३८ ।।

**(अव)** ननु? भरन्यासमन्तरेण निर्भरत्वापरपर्यायस्वयत्ननिवृत्तिर्नेत्युक्तं, तत्कथं? भरन्यासं विनाऽपि रक्षापेक्षणमात्रेण स्वयत्नविरामो प्रपत्तेः इत्याशङ्कायां तद्व्यतिरेके तद्व्यतिरेकमुपपादयति-

**(साद्धयो-)**

**अकृते तु भरन्यासे रक्षापेक्षणमात्रतः ।**
**पश्चात् स्वयत्नविरतिर्न प्रसिद्ध्यति लोकवत् ।। ३९ ।। इति ।।**

अस्यार्थः- भरन्यासे, अकृते रक्षापेक्षणमात्रतः, तवायं रक्षाभर इत्यनुक्त्वा केवलं रक्षापेक्षणमात्रतः; रक्षा मे भूयादितीच्छामात्रेण स्वयत्नविरतिः पश्चान्न प्रसिद्ध्यति, लोकवत्, लोके यथा - इदं धनमस्यामापदि मामनपेक्ष्यैव त्वया रक्षणीयं, तवैवायं भर, इति न्यस्तभरः कश्चित् स्वव्यापारान्निवर्तते, न त्वन्यः, तद्रक्षेच्छामात्रात्, तन्न्यायादिति भावः ।। ३९ ।।

**(अव)** एवं श्रीराममिश्राणां स्वप्रवृत्तिनिवृत्तिरेव प्रपत्तिरिति लक्षण-वाक्यस्य-आत्मरक्षाभरः तवैव, न मम तत्रान्वय इति भरन्यासे कृते पश्चात्; स्वयत्नविरतिव्यञ्जनद्वारा आकिञ्चन्यप्रदर्शनमावश्यकमिति तात्पर्यम्, तथा च स्वव्यापारनिवृत्तिरेवाऽऽकिञ्चन्यमिति निष्पन्नम्, भरतमुनेश्च 'तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः' इति प्रपत्तिलक्षणवाक्यस्य 'अप्रार्थितो न गोपायेत्' इति प्रार्थनमन्तरेण समर्प्यमाणं भरं न स्वीकुर्याद् इत्यावश्यकाङ्क्षभूतादुपायत्वप्रार्थ-नाद्भरस्वीकारसिद्धिरिति तात्पर्यं स्यात्, 'आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते' इति लक्षणवाक्यं तु बहुप्रमाणसहायत्वाद् "भूयसां"न्यायेन यथाश्रुतभरन्यासपरमिति त्रयाणां लक्षणवाक्यानामेकार्थत्वसिद्धये स्वव्यापारत्यागभरन्यासयो र्व्याप्यव्यापक-भावः, उपायत्वप्रार्थनाभरन्यासयोर्जन्यजनकभावः, अङ्गादिभावश्चेति आसक्ति(त्ति) भूय-स्त्वात् अभेदव्यपदेशसंभवेन लक्षणवाक्यान्यप्येकवाक्यानि भवन्तीति त्रयाणाम-भेदव्यपदेशप्रयोजकं सौहृदमिति सूक्ष्मं जानन्नेव ज्ञाता भवतीत्याह ।।

**(साद्ध्यो–)**

**आकिश्चन्यभरन्यासोपायत्वप्रार्थनात्मनाम् ।**

**त्रयाणां सौहृदं सूक्ष्मं यः पश्यति स पश्यति ।। ४० ।। इति ।।**

अस्यार्थः - आकिश्चन्यभरन्यासोपायत्वप्रार्थनारूपाणामुक्तलक्षणत्रय-प्रतिपादितानामर्थानां सूक्ष्मं= दुर्विज्ञानं, सौहृदं, अङ्गे अङ्गित्वव्यपदेशप्रयोजकं, यःपश्यति, स एव पश्यति; द्रष्टा, कुशल इत्याहुः । केचित् 'अहमस्म्यपराधाना-मालयोऽकिश्चनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः ।। शरणागतिः' इत्याकिश्चन्योपायत्वप्रार्थनयोरपि भरन्यासरूपाङ्गिशरीरानुप्रविष्टतया तयोर्भरन्यासस्य च सौहृदं; अत्यन्तसाम्यं सौक्ष्म्यं पश्यन्नेव पश्यतीति व्याचख्युः । तेषामयमाशयः; आकिश्चन्यनिवेदनाभावे उपायत्वप्रार्थनाविरहे च त्वमेवोपायान्तरस्थाने निविश्य अकिश्चनस्य मम तत्तदुपायान्तरसाध्यमभीष्टं साधय, रक्षाभरस्त्वयि निवेशितः, इतः पश्चादस्मद्यत्ननिरपेक्ष एव भवान् इममर्थं साधयतु इति वक्तुमनवकाशत्वात्, अतः तदुभयसहित एव भरन्यासःगोप्तृत्ववरणमुपायत्वप्रार्थनादन्यदेवाङ्गभूतं, इदं तूपायत्वप्रार्थनमङ्गिशरीरान्तःपातीति । पूर्वस्मिन् व्याख्यानेऽङ्गाङ्गिनोः सौहृदमभेदव्यपदेशहेतुरित्युक्तः, अस्मिन् व्याख्याने तु अङ्गिशरीरान्तःपातिनां त्रयाणां सौहृदं, तत्तद्धेतुरिति (वि)शेषः ।

अन्ये तु 'अनन्यसाद्ध्ये स्वाभीष्टे' इति भरतमुनिप्रणीतलक्षणानुसारेण साङ्गप्रपदनाधिकाराद्यश्लोके 'अभीष्टे दुस्साधे स्वत इतरतो वा क्वचन तद्भरन्यासं याच्ञान्वितमभिवदन्ति प्रपदनम्' इति प्रार्थनामात्रं नालं, किन्तु भरन्यसनमपि भरतमुनिलक्षणे प्रमाणान्तराविरोधाय प्रवेश्यमिति पूर्वार्धेन सूचयित्वा श्रीराममि-श्रोक्तस्वव्यापारनिवृत्तिरपि भरन्यासानन्तरभाविस्वनिर्भरत्वपर्यवसन्ना, नतूपायात् प्रागपि तूष्णींभावरूपेति 'इतःपश्चादस्मद्यतननिरपेक्षेण भवता समर्थ्योऽसावर्थ-स्त्विति मतिविशेषं तदविदुः' इत्युत्तरार्धेनैव स्फुटीकृतवानाचार्यः । अस्मिन् अङ्गिस्वरूपे 'अहमस्म्यपराधानामालयोऽकिश्चनोऽगतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम्' इति वरदाचार्यलक्षणानुसारेण आकिश्चन्यमपि प्रवेशनीयमित्याहत्य लक्षणचतुष्टयस्यापि ऐककण्ठ्यं सिद्धम् । इदञ्च आकिश्चन्यं

कर्मयोगादिभ्योऽशक्त्या व्यावृत्तिरूपं, प्रपदनप्राक्कालीनं, 'अभीष्टे दुस्साधे' इति पूर्वार्धे व्यक्तं, प्रपदनानन्तरं स्वरक्षणार्थव्यापारेभ्यो भरन्यासादिभ्योऽपि व्यावृत्तिरूपं, आकिञ्चन्यं श्रीराममिश्रैः स्वव्यापारनिवृत्तिरिति शब्दान्तरेण व्याहृतम् स्वनिर्भरत्वपर्यवसानमन्यदेवोत्तरार्धेन व्यक्तम् । एवमाकिञ्चन्यद्वयक्रोडीकारे वरदाचार्यश्रीराममिश्रलक्षणं द्वयमपि सङ्गतम् । ननु ? अधिकाररूपम् आकिञ्चन्यमङ्गिशरीरे प्रवेश्यमिति कथमुच्यते ? अधिकारादतिरिक्तमेव हि अङ्गिस्वरूपं वक्तुमुचितम् । किञ्च शेषशेषिभावज्ञानमुपायानुष्ठानात् प्रागेव शास्त्रजन्यमिति सम्प्रतिपन्नम् । शेषत्वज्ञानमेव हि आत्मनिक्षेपः ; सच अयमात्मा तवैवेत्याकारकः । तथा च शेषत्वज्ञानमेवाङ्गीति भवतामनभिमतमेव सिद्ध्येत्, अपि च गोप्तृत्व वरणमङ्गमित्यविवादः, तच्चोपायत्वप्रार्थनान्नातिरिच्यते इत्यङ्गस्य तस्य कथमङ्गित्ववाद इत्यत आह-आकिञ्चन्यभरन्यासेति । अधिकाररूपम् आकिञ्चन्यमेवाङ्गितामापद्यते, तथाऽपि तत्स्वरूपं सदेवाधिकारताम् अश्नुताम् । अनुसन्धीयमानं सत् अङ्गिशरीरेऽपि निवेश्यताम्, एकस्य स्वरूपसत्त्वानुसंहितत्वावस्थाभेदेन द्व्यात्मकत्वाभ्युपगमे का हानिः । अत्र श्लोके भरन्यासशब्देन भरन्यासांशभूतात्मनिक्षेपो गृह्यते । यद्यपि शेषत्वज्ञानं शास्त्रादेव जातं, तदेवात्मनिक्षेपरूपं न, तथापि शास्त्रजन्यं शेषत्वज्ञानं सर्वस्यादिकारणमन्यदेव, इदन्तु शेषत्वज्ञानं रक्षाभरन्यासफलसमर्पणविशिष्टवेषेणाङ्गपञ्चकान्विततत्ववेषेण चाङ्गिस्वरूपेऽप्यन्वेति, यथा स्वर्गकाम एक एव कर्तृत्वेन क्रियां प्रति शेषताम्, भोक्तृत्वेन तां प्रति शेषिताञ्चानुभवति ; यथा चैक एव भगवान् चिदचिद्विशिष्टवेषेण जन्मलयादिकमनुभवन् स्वरूपेण नित्यताञ्चानुभवति, तथाऽत्रापि न विरोधः । उपायत्ववरणगोप्तृत्ववरणयोश्च स्फुट एव भेदः, उपायत्वस्य चेतनाचेतनसाधारण्यात्, गोप्तृत्वस्य चेतनैकान्तत्वात् । अतस्त्रयाणामङ्गिस्वरूपे अनुप्रविष्टानामाकिञ्चन्यात्मनिक्षेपोपायत्वप्रार्थनानां स्वस्वप्रतिसम्बन्धिभिः अधिकारिगताकिञ्चन्यशास्त्रजन्यशेषत्वज्ञानगोप्तृत्ववरणैस्सौहृदं जानन्नेव कोविद इत्यर्थ इत्याहुः ।। ४० ।।

**(अव)** अथात्मनिक्षेपशेषत्वज्ञानयोरेकत्वे व्यवस्थाभेदादुभयत्राप्यप्रवेश इत्युक्तम् ; तत्किमर्थं ? उभयत्रान्वये प्रयोजनाभावादित्यत आह-

(साद्ध्यो–)

**जितकौस्तुभचौर्यस्य सम्राजस्सर्वपाप्मनाम् ।**
**शिष्टं ह्यात्मापहारस्य निष्कृतिस्स्वभरार्पणम् ।। ४१ ।। इति ।।**

**परशेषत्वधीमात्रमधिकारिविशेषकम् ।**
**पश्चादात्मापहारस्य निरोधाय च कल्पते ।। ४२ ।। इति ।।**

अनयोरर्थः- स्वभरार्पणं; स्वरक्षाभरार्पणं, स्वरूपफलसमर्पणगर्भं, कर्तृ, जितकौस्तुभचौर्यस्य, जितं कौस्तुभचौर्यं येन ततोऽपि कौस्तुभचौर्यादप्यतिशयितमात्मस्वरूपचौर्यं, अचेतनात्, अस्वप्रकाशनात् कौस्तुभादप्यतिशयितो हि जीवः अस्त्रभूषणाध्यायरीत्या भगवतो हृदयङ्गममाभरणं भवति, तथारूपे च जीवे अहं मे मम इति प्रतिसन्धानरूपमात्मापहारचौर्यं कौस्तुभचौर्यमतिशेत इति भावः । सर्वपाप्मनां सम्राजः= सार्वभौमस्य, तेषामादिकारणस्येत्यर्थः, 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा' इति स्मरणात् । निष्कृतिः= प्रायश्चित्तं, शिष्टं हि; विहितं हि । 'मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि' इत्यादिप्रमाणशतप्रसिद्धमभिव्यनक्ति हिशब्दः, अयमात्मा तवैव, अस्य रक्षाभरश्च तवैव, तत्फलस्वाम्यं च तवैव, इत्यंशत्रयसमर्पणात्मकं इदमात्मस्वरूपादित्रयस्यान्यदीयत्वमदीयत्वादि - भ्रमनिवर्तनायाऽलमिति भावः ।। ४१ ।।

तथा चाङ्गिस्वरूपप्रविष्टात्मनिक्षेपरूपशेषत्वज्ञानप्रयोजनमात्मापहार-दोषनिवर्तनमिति तत्सिद्धवत्कृत्य केवलशास्त्रजन्यशेषत्वज्ञानस्य प्रयोजनद्वयमाह- परशेषत्वेत्यादि। परशेषत्वधीमात्रं= परशेषत्वज्ञानमात्रं, अत्र भरन्यासबहिर्भूतत्वं विवक्षितम्, अधिकारिविशेषकं, भगवत्कैङ्कर्यकामनायास्स्वर्गकामनाया इवाधिकाररूपाया विशेषकं; सम्पादकम्, शेषत्वज्ञानाभावे तत्कैङ्कर्यकामनाया अनुत्पादात् । पश्चात्= भरन्यासानन्तरं, आत्मापहारस्य निरोधाय= अनुत्पादाय च कल्पते; समर्थं भवति । चकारः पूर्वकालीनाधिकारविशेषकत्वसमुच्चयद्योतकः, तथाच शेषत्वज्ञानस्योपायात् प्रागधिकारसम्पादकत्वं, पश्चादात्मापहारदोषानुत्पा-दकत्वं चेति द्वयं प्रयोजनम् ।। ४२ ।।

(अव) ननु 'ज्ञात्वा देवं मुच्यते सर्वपापैः' 'तमेवं विदित्वाऽति मृत्युमेति'इति ज्ञानमेव मोक्षसाधनं विहितं; अतश्शेषत्वज्ञानमेव मोक्षायालं, किं भरन्यासेन! इत्यत आह-

(साद्ध्यो-)

**ज्ञानान्मोक्षोपदेशो हि तत्पूर्वोपासनादिना ।**

**उपासनादिरूपाद्वा ज्ञानान्मोक्षो विवक्षितः ।। ४३ ।।** इति ।।

अस्यार्थः- ज्ञानात्मोक्षोपदेशः तत्पूर्वोपासनादिना- तत्पूर्वं= शास्त्रजन्य-ज्ञानपूर्वकं तदुपासनादिकञ्च तेन द्वारेणेत्यध्याहारः,उपासनादिकं द्वारीकृत्य ज्ञानं मोक्षसाधनमित्युपदिश्यत इति भावः । उपासनादिरूपात्, आदिशब्देन प्रपत्तिर्गृह्यते, भक्तिप्रपत्तिरूपाद्वा ज्ञानान्मोक्षो विवक्षितः, अन्यथा भक्तिप्रपत्तिविधानवैयर्थ्यापत्तिः, वाक्यार्थज्ञानवत् अविधेयज्ञानवादप्रसङ्गश्च, भक्तिप्रपत्तिविधानानभ्युपगमे भाष्यगीताभाष्यादिविरोधश्च। तस्मात् न शेषत्वज्ञानमात्रमङ्गिं, किन्तु तद्घटितमात्मरक्षाभरसमर्पणमिति स्थितम् ।। ४३ ।।

(अव) शेषत्वज्ञानमात्रस्य प्रपदनत्वे बाधकान्तरमप्याह-

(साद्ध्यो-)

**वाक्यमात्रेण सिद्धत्वात् सिद्धोपाय इहोच्यते ।**

**प्रपत्तिरिति वादस्तु विधिनाऽत्र विरुध्यते ।। ४४ ।।** इति ।।

अस्यार्थः- इह=प्रपत्तिप्रकरणे,शेषत्वज्ञानमित्यद्ध्याहार्यं, वाक्यमात्रेण सिद्धत्वात् शेषत्वज्ञानं भगवानिव सिद्धोपाय उच्यते, कृतिसाध्यत्वं मात्रपदव्यावर्त्यं, यदि कृतिसाद्ध्यत्वे सत्युपायत्वमस्य स्यात् तदा हि तस्य साद्ध्योपायत्वमुच्येत, नहीदं शेषत्वज्ञानं कृतिसाद्ध्यम् । अत्र = शेषत्वज्ञाने, प्रपत्तिरिति वादस्तु - विधिना= कृतिसाद्ध्यत्वाभिधायिना विधिना, विरुद्ध्यते, वाक्यमात्रसिद्धत्वेन कृतिसाद्ध्यत्वविरहात् भगवानिव तच्छेषत्वज्ञानञ्च सिद्धोपाय इति काममुच्यताम्; प्रपत्तिरिति वादस्तु 'तद्गोचरः' विधिना कृतिसाद्ध्यत्वाभिधायिना विरुद्ध्यत इति भावः ।। अत्र 'सिद्धोपाय इहोच्यताम्' इति सम्यक् पाठः ।। ४४ ।।

* * *

## अथ प्रभावव्यवस्थाधिकारः ।।

**(अव)** एवं सिद्धोपायसाद्ध्योपायविषयं एकदेशिनां व्यामोहं शमयित्वा, भागवतानां 'आस्फोटयन्ति पितरः प्रणृत्यन्ति पितामहाः । वैष्णवो नः कुले जातस्स नस्सन्तारयिष्यति' इत्यादिना महाप्रभाववत्तां प्रतिपाद्य, तत्राप्येकदेशिनां भागवतशूद्राणामभागवतब्राह्मणानाञ्च शूद्रत्वब्राह्मणत्वयोर्गमनं व्युत्क्रमेणागमनञ्च प्रतिपादयताम् 'न शूद्रा भगवद्भक्ता विप्रा भागवताःस्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने' इत्यादिवचनैस्सञ्जातं व्यामोहं शमयाम इति प्रतिज्ञाय, शूद्रभागवतानामेवमाचारः, ब्राह्मणभागवतानामेवं, केवलशूद्राणां केवलब्राह्मणानां चैवम्, इति व्यवस्थापराणि वचनानि व्याहन्येरन्; तस्मात् केवलयोस्तयोर्यावदन्तरं भागवतयोर्न तावदन्तरमित्यत्र तेषां वचनानां तात्पर्यमवश्यं वाच्यं; अन्यथा बहुव्याकुली स्यात्, तस्माच्छूद्रभागवतेषु ब्राह्मणवत् प्रतिपत्तिविशेष-कर्तव्यतापराण्येवंजातीयकवचनानि, अन्यथा यथाश्रुतार्थमात्रपरत्वे 'चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः । चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः' इत्यादिवचनमपि यथाश्रुतार्थपरमेव किन्न स्यात् ? तथा च प्रतिपत्तिविशेषार्थ-मेवान्यत्रान्यत्वकीर्तनमित्याह-

**(प्रव्य-)**

> **प्रतिपत्तिविशेषार्थमन्यत्रान्यत्वकीर्तनम् ।**
> **विशेषविधिसाकाङ्क्षास्तत्र तत्तत्प्रवृत्तयः ।। ४५ ।। इति ।।**

अस्यार्थः- अन्यत्र; भागवताभागवतयोश्शूद्रब्राह्मणयोः, अन्यत्वकीर्तनम्; ब्राह्मणत्वशूद्रत्वकीर्तनम्, प्रतिपत्तिविशेषार्थं; ब्राह्मणवत् शूद्रवच्च पूज्यत्वापूज्य-त्वप्रतिपत्त्यर्थं, तत्र= शूद्रादौ, तत्तत्प्रवृत्तयः; श्राद्धनिमन्त्रण-वेदाध्यापनादिप्रवृत्तयः विशेषविधिसाकाङ्क्षाः, ब्राह्मणत्वादिविशेषविषयविधिसाकाङ्क्षाः, ब्राह्मण्यां ब्राह्मणाज्जातत्वमस्ति चेत् भागवतास्तत्तत्प्रवृत्त्यर्हाः, तदभावे नेति, एवं 'प्रतिपत्तिविशेषार्थमन्यत्र अन्यत्वकीर्तनम्' इति वचनतात्पर्यानुक्तौ जातिसाङ्कर्यं, वर्णसाङ्कर्यं, आश्रमसाङ्कर्यं च स्यात् । वर्णविशेषप्रतिनियताश्च धर्माःशेषसंहितायां

'ब्राह्मे मुहूर्ते चोत्थाय भगवन्नामकीर्तनम् । आचार्यकीर्तनं कुर्यात् गच्छेच्चाथ नदीं द्विजः ।। स्नात्वा विधिवदाचम्य शौचाचमनपूर्वकम्। कौपीनं कटिसूत्रं च वस्त्रयुग्मं च धारयेत् ।। सच्छिद्रमूर्ध्वपुण्ड्राणि पवित्रश्च द्विजोत्तमः । प्राङ्मुखोदङ्मुखो वाऽपि गायत्रीं मूलविद्यया । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । अष्टाविंशतिवारं वा जपेन्न्यासादिकं द्विजः । मन्त्ररत्नं जपेद्भक्त्या यावज्जीवं जपेत्ततः । सर्वदा सर्वकालेषु मोक्षार्थी स्वाश्रमोचितैः । जपोपस्थानकं कृत्वा ब्रह्मयज्ञमनन्तरम्। उपादानं ततस्स्नानं कुर्यात् माध्याह्निकं ततः ।। होमार्चनविधानं च वैश्वदेवमतःपरम् । भुञ्जीयात् विधिवद्विप्रः पञ्चसंस्कारसंस्कृतैः । स्वाध्यायश्च पुराणश्च हरि-सङ्कीर्तनादिकम् । मुमुक्षुर्नित्ययुक्तश्च मन्त्ररत्नं सदा जपेत् ।' इत्युक्त्वा 'स्त्रीशूद्राणां विधिं वक्ष्ये सम्यक् प्रणववर्जितम् ।।' इत्यारभ्य 'गुरुतद्भक्तशुश्रूषां मच्छुश्रूषां च कारयेत् ।।' इत्यन्तेन विधीयन्ते, तदानर्थक्यं च स्यादिति भावः ।। ४५ ।।

उक्तमर्थमुपसंहरन् परपक्षमनूद्य दूषयति द्वाभ्याम् ।।

(प्रव्य-)

**अतो जातेर्निकृष्टायास्सर्वस्या वा विनाशतः ।**
**साजात्यं विष्णुभक्तानामिति मन्दमिदं वचः ।। ४६ ।।**
**वैष्णवत्वेन मान्यत्वं समानं मुनिसम्मतम् ।**
**जात्यादिध्वंसतस्साम्यं मुक्तिकाले भविष्यति ।। ४७ ।।** इति ।।

अनयोरर्थः- अतः= उक्तहेतुभिः निकृष्टाया जातेः= शूद्रत्वादिजातेः, सर्वस्या वा, उक्तमनुष्यत्वादिसकलजातीनां विनाशात्, विष्णुभक्तानां साजात्यं, वैष्णवत्वादिजातिमात्रेण साजात्यम्- इति वचो मन्दं; विकल्पासहत्वात्; भागवतब्राह्मणशूद्राणां ब्राह्मणत्वादिजातिसद्भाव एव साम्यं विवक्षितम्? उत ब्राह्मण्यादिसकलजातिध्वंसतो निर्विशेषत्वात् साम्यमिति। आद्य आह; वैष्णवत्वेनेत्यादि । मुनिसम्मतम्, भागवतानां तत्तज्ज्ञात्यनुगुणाचारव्यवस्थाविधायकं मुनिसम्मतम्, वैष्णवत्वेन सामान्यम्; समानत्वमस्माकमपि तदिष्टमित्याशयः । द्वितीयं दूषयति-जात्यादीति । स्पष्टोऽर्थः ।। ४७ ।।

**(अव)** एवं जातिगमनागमनवादिनां मतं निरस्य, चरमश्लोकस्थ-सर्वधर्मत्यागविधिश्रवणात् स्वरूपेण त्यागमिच्छतां मतमपाकर्तुमुपोद्घाततया परित्यज्येत्यस्यानुवादत्वपक्षे आकिञ्चन्यप्रकाशकत्वं एकशब्दस्योपायान्तर-नैरपेक्ष्यपरत्वं परित्यज्येत्यस्य विधित्वपक्षे प्रपत्त्युपायस्य उपायान्तर -नैरपेक्ष्यप्रकाशकत्वं, 'मा शुचः' इति शोकनिषेधादाक्षिप्तमाकिञ्चन्यम् इत्यभिहितं, एवञ्च सर्वधर्मपरित्यागविशिष्टप्रपत्तिविधायकमित्यस्मिन् द्वितीयपक्षे केषां परित्यागो विधीयते? किं भक्त्यङ्गतया सिद्धानां तन्न्यायेनात्रापि प्राप्तानां गतिचिन्तनादीनां 'सहकारित्वेन चे'ति तदङ्गतया विहितानां नित्यनैमित्तिकादिवर्णाश्रमधर्माणां च? उत स्वाङ्गानामानुकूल्यसङ्कल्पादीनां? नाद्यः; भवतामनिष्टत्वात्, नहि भवत्पक्षे वर्णाश्रमधर्मस्वरूपत्याग इष्टः । न द्वितीयः, अङ्गविधायकशास्त्रानर्थक्यप्रसङ्गात् इत्यत्राह-

**(प्रव्य-)**

**प्रकृतोपासनन्यायात् तदङ्गानामुपस्थितौ ।**
**अन्येषां चैतदङ्गत्वत्यागोऽत्र प्रतिपाद्यते ।। ४८ ।।** इति ।।

अस्यार्थः-प्रकृतोपासनन्यायात् उपासनस्य प्रकृतत्वात् प्रकृतोपासने तत्प्रकरणपठितान्यङ्गानि प्राप्नुवन्ति, तन्न्यायादेव विधीयमानप्रपत्तावपि तानि प्राप्नुवन्तीति तदङ्गानां= गतिचिन्तनादीनाम् अन्येषाञ्च नित्य -नैमित्तिकादीनां उपस्थितौ= प्रसक्तौ सत्यां,तेषामेतदङ्गत्वत्याग एवात्र = चरमश्लोके प्रतिपाद्यते; प्रपत्तेर्निरपेक्षोपायत्वादितराङ्गानपेक्षा; नतु गतिचिन्तननित्यनैमित्तिकादीनां स्वरूपत्याग इति ।। ४८ ।।

**(अव)** ननु? भरन्यासस्य भक्त्यङ्गनिरपेक्षत्वे किं नित्यनैमित्तिकादिभिः इत्याशङ्क्य, स्वतन्त्राधिकारत्वात् किङ्करत्वाच्च स्वाम्याज्ञातिलङ्घनम् अनुचितम्, प्रपत्त्यङ्गत्वेनानुष्ठानानर्हत्वेऽपि प्रपत्त्यङ्गत्वमन्तरेणापि स्वतन्त्राधिकारत्वेन वर्णाश्रमधर्माणां विधानात् प्रपन्नस्य किङ्करत्वाच्च स्वाम्याज्ञातिलङ्घने प्रत्यवायस्स्यात्, एवमाज्ञाकैङ्कर्यस्यात्याज्यत्वादिति पूर्ववाक्ये स्थितं नत्वितरस्येव

प्रपन्नस्याज्ञातिलङ्घनेऽपि न प्रत्यवाय इत्यत्राह-

**(प्रव्य-)**

**आज्ञाविरोधिभिः स्वार्हप्रायश्चित्तपराङ्मुखैः ।**

**स्वाधिकारोचितस्सर्वैः प्रत्यवायो दुरत्ययः ।। ४९ ।।** इति ।।

अस्यार्थः-आज्ञाविरोधिभिः,अकृत्यकरणकृत्याकरणप्रवृत्तैः स्वार्ह - प्रायश्चित्तपराङ्मुखैः- शक्तौ प्रतिपदोक्तं स्यात्, अशक्तौ शरणागतिरिति स्वाधिकारार्हप्रपत्त्यादिप्रायश्चित्तमप्यकुर्वाणैः सर्वैः= प्रपन्नैः स्वाधिकारोचितः लघुदण्डहेतुः प्रत्यवायः दुरत्ययः= दुर्लङ्घ्यः इति ।।

**(अव)** तथाऽप्याज्ञानुपालने तत्तत्प्रयोजनाभावात् किमर्थत्वाशङ्कां परिहरति-

**(प्रव्य-)**

**आज्ञानुपालने तत्तत्प्रत्यवायनिवारणम् ।**

**स्वामिसन्तोषतः प्रीतिरिति लाभद्वयं स्थिरम् ।। ५० ।।** इति ।।

अस्यार्थः- आज्ञानुपालने तत्तत्प्रत्यवायनिवारणम्, लघुदण्डहेतुभूतानामपि प्रत्यवायानां निवारणम्, स्वामिसन्तोषतः स्वस्य प्रीतिश्चेति लाभद्वयं स्थिरं इति ।। ५० ।।

**(अव)** ननु ? सन्ध्यानुष्ठाने प्रपन्नस्य ब्रह्मलोकादिप्राप्तिरपि स्यात्, यदि तत्कामनाविरहात् तत्फलानुदयः तथा(तदा) प्रत्यवायकामनाविरहात् प्रत्यवायानुदयस्स्यात्, इत्यत्राह -

**(प्रव्य-) अनिच्छातो निवर्तेत स्वर्गाद्यं कर्मणां फलम् ।**

**अमर्यादस्य दुर्वारः प्रत्यवायोऽन्यहेतुकः ।। ५१ ।।** इति ।।

अस्यार्थः- स्वर्गाद्यं कर्मणां फलम्, अनिच्छातः= इच्छाविरहात्, निवर्तेत, कामनाधिकारत्वात् तस्य अमर्यादस्य; मर्यादामाज्ञामननुष्ठितवतः अन्यहेतुकः= कामनाव्यतिरिक्तनिषिद्धानुष्ठानहेतुकः प्रत्यवायो दुर्वार-इति ।। ५१ ।।

**(अव)** 'सर्वधर्मान् परित्यज्य' इति सर्वधर्मस्वरूपत्यागस्य कण्ठत उक्तत्वात् तत्परित्यागे कथं प्रपन्नस्य प्रत्यवायोदय इत्याशङ्क्य, गीताभाष्ये चरमश्लोकविवरणे- 'सङ्गं त्यक्त्वा फलञ्चैव स त्यागस्सात्विको मतः' इति स्वाधीनकर्तृत्वस्वार्थभोक्तृत्वबुद्धिविशेषत्याग एव,न स्वरूपत्याग इति, स्वतन्त्रप्रपत्तेर्विधिरिति प्रथमयोजनायां त्यागशब्दार्थस्य तथैव उचितत्वात् न नित्यादीनां स्वरूपत्यागप्रसङ्गः अङ्गप्रपत्तिविधिपरत्वमिति, द्वितीययोजनायां पूर्वोक्तकर्तृत्वबुद्धिविशेषत्यागपूर्वकमेव प्रपत्त्यनुष्ठानंकर्तव्यम्, प्रागुक्तभक्तियोगादिस्थाने भगवतो निवेशनमुत्तरकृत्यकैङ्कर्यस्य स्वयं प्रयोजनतयाऽनुष्ठानञ्च सर्वधर्मपरित्यागवचनस्य तात्पर्यविषयार्थ इति, न योजनाद्वयेऽपि नित्यादिपरित्यागप्रसङ्ग इत्यभिहितम् । किञ्च चरमश्लोकस्य गुरूपायाशक्तं प्रति लघूपायविधानमात्रपरत्वं । न तु कर्मत्यागपरत्वमपीत्याह-

**(प्रव्य–) सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना ।**
**स स तस्याहमेवेति चरमश्लोकसंग्रहः ।। ५२ ।।** इति ।।

अस्यार्थः- सुदुष्करेण; अत्यन्तदुष्करेण, येनयेनेष्टहेतुना; मोक्षाद्यभीष्टहेतुना, कर्मयोगादिना, करणे तृतीया, यश्शोचेत्; निर्विण्णो भवति, तस्य = अधिकारिणः, अकिञ्चनस्य, अहमेव सस; तत्तदभीष्टोपायः इति, चरमश्लोकसंग्रहःइति । अयं भावः-सर्वधर्मान् सर्वान् अलौकिक श्रेयस्साधनभूतान् अशक्त्या परित्यज्य शोचतोऽकिञ्चनस्य मामेकमेवोपायत्वेन वृणानस्य तत्तादुपायस्थाने स्थितः अहमेव तत्तदभीष्टप्रतिबन्धकपापनिवर्तनं कृत्वा तत्तत्फलं ददामीति शरण्यस्य तात्पर्यं इति। एवं सति नित्यादित्यागपरत्वमप्रामाणिकं इति ।। ५२ ।।

**(अव)** ननु ?'सर्वधर्मान् परित्यज्य' 'शरणं व्रज ' इति विधानसामर्थ्यात् सर्वधर्मत्यागाङ्गकप्रपत्तिविधिरिति प्रतिभातीत्यत्राह-

**(प्रव्य–)**

**भावाभावौ न धर्माणां प्रपत्तेरङ्गमिष्यते ।**
**स्वतन्त्रशिष्ट्या शक्येहाशेषाभावोऽधिकारगः ।। ५३ ।।** इति ।।

अस्यार्थः-धर्माणां भावाभावौ न प्रपत्तेरङ्गम्; धर्माणामनुष्ठानं तदभावश्च

नाङ्गमिष्यते, कुत:? स्वतन्त्रशिष्ट्या; शिष्टि:= शासनम्, विधि: इत्यर्थ: । स्वतन्त्रविधिना; 'अहरहस्सन्ध्यामुपासीत' इत्यादिना किञ्चित् प्रति अङ्गत्वेन विधीयते स्वतन्त्रतया प्रधानतया शासनादित्यर्थ: । अशक्येहाशेषाभाव: अशक्या ईहा= चेष्टा अनुष्ठानं येषां ते, अशक्येहा: । अशक्येहानाम् अशेषाणामभाव: अधिकारग:, अधिकारकोटिप्रविष्ट:, नत्वङ्गतया विधीयत इति भाव: । यद्वा धर्माणामभाव: भावो वा न प्रपत्तेरङ्गमिष्यते, किन्तु स्वतन्त्रस्य शिष्ट्या; शासनेन, शक्येहा, शक्यानामनुष्ठानं, शेषाभावस्तु अधिकारग:- अशक्यम् परित्यज्य शक्याधिकारकं शक्तानेवाधिकृत्य वर्तते इत्यर्थ: । तथा च धर्मत्यागो न प्रपत्त्यङ्गं तथा धर्माणां यावच्छक्त्यनुष्ठानमपि इति मम प्रतिभाति, साम्प्रदायिका: प्रष्टव्या: ।। ५३ ।।

**(अव)** ननु? प्रपत्त्यनुष्ठानकाले यथा प्रपत्तिविरुद्धतया केषाञ्चिन्नित्यनैमित्तिकानामननुष्ठानेऽपि न दोष:- तथा तत ऊर्ध्वं नित्यनैमित्तिकानाम् अननुष्ठानेऽपि प्रपन्नानां न प्रत्यवाय इत्यत आह-

**(प्रव्य-)**

**क्रत्वनङ्गतया ये तु तदानीमननुष्ठिता: ।**
**स्वकाले स्वविधेरेव कार्यास्ते तद्वदत्र न: ।। ५४ ।।** इति ।।

अस्यार्थ:- क्रत्वनङ्गतया, क्रत्वङ्गत्वाभावात्, तदानीं; दीक्षाकाले, स्नानसन्ध्यादयोऽननुष्ठिता:, ते स्वकाले; क्रतोरूर्ध्वकाले, स्वविधेरेव, स्वस्वविधायकवचनबलादेव, कार्या:, तद्वदत्र न: कार्या:, प्रपत्तिकालानवरुद्धकाले त्वनुष्ठेया एवेत्यर्थ: ।। ५४ ।।

**(अव)** अत्र केचित् 'तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तिश्च निवृत्तिश्च श्रोतव्यं श्रुतमेव च ।। मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयम्' ।। इति प्रपत्तिविधौ प्रवृत्ति निवृत्तिरूपधर्माणां त्यागश्रवणात् नित्यनैमित्तिकत्याग एव न केवलम्, किन्तु 'न कलञ्जं भक्षयेत्' 'न हिंस्यात्, नानृतं वदेत्' इत्यादिनिषिद्धनिवृत्तिरूपा अपि धर्मास्त्याज्या एव, अतो निषिद्धानुष्ठानत: अपि प्रपन्न: प्रत्यवायेन न लिप्यत इत्याहु:, तदत्यन्ताज्ञा-

नमौर्ख्यादिविलसितं, प्रपत्त्यनुष्ठानकालेऽवश्यं निषिद्धानुष्ठानेन भाव्यम्, इति भागवतानां हिंसादिकं वा अन्यदारहरणादिकं वा कृत्वा ततः प्रपद्येत, नैवमाचारमुपलभामहे । वचनस्यार्थस्तु न तथा, निवृत्तिधर्माणामलौकिक-श्रेयस्साधनत्वरूपं धर्मत्वमेव न, किन्तु प्रत्यवायपरिहारमात्रहेतुत्वमेव, यदिवा तेऽपि धर्मा उच्यन्ते तदाऽपि न हानिः, यथा - 'न हिंस्यात् सर्वा भूतानी'ति सामान्यतो निषेधेऽपि 'अग्नीषोमीयं पशुमालभेत' इति विशेषविधानात् यागादिकमुपादीयते । एवं सर्वधर्मत्यागविधावपि न कलञ्जभक्षणादि कुर्यात्, नाशुचिर्वर्तेत, इत्यादिविशेषविधिबलात् निवृत्तिधर्मत्यागो न युक्त इत्याह-
(प्रव्य-)

**अधर्मपरिहारेऽपि धर्मत्वेन विवक्षिते ।**
**स्यात् स्वतन्त्रविधेरेव नित्यं तस्य परिग्रहः ।। ५५ ।।** इति ।।

अस्यार्थः- अधर्मपरिहारे निषिद्धानां हिंसादीनामधर्मत्वेन तत्परिहारे, धर्मत्वेन विवक्षितेऽपि तस्य धर्मत्वमेव दुर्वचम् अधर्मनिवृत्तिमात्रत्वात्, अथापि धर्मत्वञ्चेदभ्युपगम्यते तत्रापीत्यभ्युपेत्यवादद्योतनार्थः अपिशब्दः । तस्य; अधर्मपरिहारस्य स्वतन्त्रविधेरेव; न हिंसादिकं कुर्यादिति स्वातन्त्र्येण यत्किञ्चित्फलकामशेषत्वमन्तरेण, यद्वा स्वतन्त्रस्य भगवतश्शासनादेवं मा कुर्विति स्वतन्त्रस्य नियमनात् तस्य= अधर्मपरिहारस्य नित्यं परिग्रह इति प्राचां व्याख्यानम् ।। प्रपन्नानुद्दिश्य सर्वधर्मत्यागे सामान्यतो विहितेऽपि 'उपायापाय-सन्त्यागी मद्ध्यमां वृत्तिमाश्रयेत्। अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत्।।' इत्यादिरूपात् स्वतन्त्रस्य= भगवतो विधेरेव प्रपन्नं प्रत्येव भगवन्नियमनात् नित्यस्य परिग्रह इति युक्तं व्याख्यानम् ।। ५५ ।।

**(अव)** एवं सर्वधर्मत्यागवचनतात्पर्यनिश्चये सति 'तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम्' इत्यत्र चोदनामुत्सृज्येत्यस्य विहितमुत्सृज्येति, प्रतिचोदनामुत्सृज्येत्यस्य निषिद्धवर्जनमुत्सृज्येति अर्थस्स्यात् । तथाचानुकूल्यं परित्यज्य प्रातिकूल्यं परिगृह्य प्रपद्येतेति पर्यवस्येत्, तथा च 'आनुकूल्यस्य

सङ्कल्पः प्रातिकूल्यस्य वर्जनम्' इत्यादिवचनसिद्धम् तदुभयाङ्गत्वमुन्मूलितं स्यादित्यभिप्रयन्नाह-

**(प्र.व्य–)**

**आनुकूल्यपरित्यागं प्रातिकूल्यपरिग्रहम् ।**
**प्रपत्त्यङ्गं प्रतिज्ञातुं न शक्यं साधुसंसदि ।। ५६ ।। इति ।।**

स्पष्टोऽर्थः ।। ५६ ।।

**(अव)** ननु? सर्वधर्मविधिस्सर्वोऽपि प्रपञ्चव्यतिरिक्तविषयोऽस्तु सर्वधर्मत्यागविधिस्सर्वोऽपि प्रपञ्चविषयोऽस्त्वित्यत्राह-

**(प्र.व्य–)**

**प्रपन्नमधिकृत्यैव सदाचारानतिक्रमः ।**
**प्रपत्त्यद्ध्यायपठितः प्रतिसन्धीयतामिह ।। ५७ ।। इति ।।**

अस्यार्थः:- प्रपन्नमधिकृत्यैव, यमधिकृत्य सर्वकर्मत्यागविधिं ब्रूषे तमेवोद्दिश्येत्येवकारार्थः । प्रपत्त्यद्ध्यायपठितः सदाचारानतिक्रमः इह प्रतिसन्धीयताम् । ''एवं विलङ्घ्यन् मर्त्यो मर्यादां वेदनिर्मिताम् । प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात्'' इत्यादिकं इह अनुसन्धीयतामिति ।। ५७ ।।

**(अव)** 'நாயினேன் செய்த குற்றம் நற்றமாகவே கொள் ஞாலநாதனே' इति पूर्वाचार्यगाथायां हे स्वामिन्, मदीयमपराधमुपचारतया स्वीकुर्विति प्रपन्नापराधा भगवदुपचारकल्पा इत्याविष्करणात् अपराधेऽपि न दोष इत्याशङ्क्य, तत्रापि गाथायां तात्पर्यतः क्षमस्वेति प्रार्थना कर्तव्या प्रपन्नैरिति ध्वननात् 'अज्ञानादथवा ज्ञानादपराधेषु सत्स्वपि । प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम्' इति क्षापणमेव प्रायश्चित्तमित्युक्तम् पूर्ववाक्ये । नन्वेवं प्रतिपदोक्तं सर्वं प्रायश्चित्तशास्त्रमनर्थकं स्यादित्यत्राह-

**(प्र.व्य–)**

**प्रायश्चित्तान्तराशक्तः कालक्षेपाक्षमोऽपि वा ।**
**पुनः प्रपद्यते नाथमभिन्दन् लोकसङ्ग्रहम् ।। ५८ ।। इति ।।**

अस्यार्थः-प्रायश्चित्तान्तराशक्तः =धीपूर्वोत्तराघस्यापि सम्भावितत्वात् तन्निराकरणाय कृच्छ्रचान्द्रायणादितत्तत्प्रायश्चित्ताशक्तः, कालक्षेपाक्षमोऽपि वा-शक्तौ सत्यामप्यनुतापातिशयादचिरादेव शरीरपातभयेन कालविलम्बाक्षमः प्रपन्नः लोकसङ्ग्रहं अभिन्दन्= स्वस्य भगवत्प्रियत्वेऽपि ''सङ्ग्रहाय च लोकस्य मर्यादास्थापनाय च'' इति न्यायात् 'प्रायश्चित्तिरियं साऽत्र यत्पुनश्शरणं व्रजेत्' इति विधानादयं पुनः प्रपद्यते, प्रतिपदोक्तप्रायश्चित्ताशक्तौ प्रायश्चित्तस्य स्वल्पकालसाध्यतायां वा प्रतिपदोक्तमेव कर्तुमुचितम्, अन्यथा पुनः प्रपत्तिरेव, अन्यतरकल्पानाश्रयणे लोकमर्यादाऽतिलङ्घनात् निग्रहलक्ष्य एव स्यादिति भावः। एवं प्रपन्नानां बुद्धिपूर्वोत्तराघे संभाविते तस्य प्रामादिकवदश्लेषाभावात् स्वाधिकारोचितप्रायश्चित्तमेव क्षममिति स्थितम् ।। ५८ ।।

**(अव)** नन्वस्तु निषिद्धानुष्ठानेऽप्यलेपः, तन्न्यायाद्विहितानुष्ठाने - ऽप्यलेपोऽस्तु, किमर्थं तत्र प्रद्वेषः? इत्यत आह-

**(प्र.व्य-)**

**प्रपन्नस्य निषिद्धैरप्यलेपमुपपादयन् ।**
**तथाऽभिमतसद्वृत्तनिष्ठेभ्यःकिमसूयति ।। ५९ ।।** इति ।।

अस्यार्थः- प्रपन्नस्य निषिद्धैः; परस्वहरणपरदाराभिमर्शनादिभिरपि अलेपं= अश्लेषं उपपादयन् । कश्चिदिति नामग्रहणानर्हतया विशेष्यानुपादानं, तथा अभिमतसद्वृत्तनिष्ठेभ्यः, तथा=उक्तप्रकारेण अभिमतं=पूर्वाचार्याभिमतं सद्वृत्तं, तत्र निष्ठा येषां तेभ्यः किमसूयति। निषिद्धैरप्यलेपश्चेत् तदा सद्वृत्तैरपि अलेपः कैमुत्यसिद्ध इति सद्वृत्तनिष्ठेभ्योऽसूया किमर्था, 'क्रुध-द्रुह' इति चतुर्थी ।। ५९ ।।

**(अव)** तदेवोपपादयति -

**(प्र.व्य-)**

**आज्ञातिलङ्घने यस्य रक्षकत्वं न भज्यते ।**
**आज्ञानुपालने तस्य कथं तदुपरुद्ध्यते ।। ६० ।।** इति ।।

अस्यार्थः- 'श्रुतिस्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम

द्रोही मद्भक्तोऽपि न वैष्णवः ।। एवं विलङ्घ्यन्' इत्यादि वैष्णवान् उद्दिश्यैव आज्ञातिलङ्घनं भगवन्निग्रहहेतुरिति ज्ञात्वाऽपि निषिद्धानुष्ठानप्रवृत्तान् प्रपन्नान् प्रत्यपि भगवतो रक्षकत्वं चेन्न भज्यते तदाऽऽज्ञानुपालने तद्रक्षकत्वं कथमुपरुद्ध्यते, कौटिल्ये सति शिक्षयाऽप्यनघयन् शेषी स्वाज्ञानिष्ठान् कथं न रक्षतीति भावः ।। ६० ।।

**(अव)** विहितस्यापरित्याज्यत्वे युक्त्यन्तरमाह-

**न चाचारं विना किञ्चित् कैङ्कर्यमुपपद्यते ।**
**नहि शौचमकृत्वैव समाराधनमर्हति ।। ६१ ।।** इति ।।

अस्यार्थः-'सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु' इति शुचित्व-प्रयोजकसन्ध्याद्यभावे सर्वकर्मानर्हत्वापत्त्या आचारं विना कैङ्कर्यमपि स्वाभिमतं नोपपद्यते । शुचित्वाभावेऽपि कैङ्कर्यसिद्धौ किं बाधकमित्यत्र प्रतिबन्दिमाह- शौचमकृत्वा= जलमलोत्सर्गानन्तरं शौचं अकृत्वैव समाराधनम्, भगवत इति शेषः । अर्हति नहि, गुदादिशौचदन्तधावनस्नानवत् सन्ध्यादीनामपि शौचत्वं शास्त्रोक्तमिति तुल्यम्, इति भावः ।। ६१ ।।

**(अव)** ननु आचारस्य सर्वधर्मानुष्ठानप्रयोजकत्वं कुत्रोपदिश्यत इत्यत्राह-

**आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ।**
**इति पञ्चमवेदेऽपि सर्वसारार्थ ईरितः ।। ६२ ।।** इति ।।

अस्यार्थः- भगवत्प्रीतिमात्रफलकतया अनुष्ठीयमानोऽपि धर्मः आचारप्रभवः; आचारप्रयोज्यः, तस्य च धर्मस्य अच्युतः प्रभुः, धर्माराद्ध्य इति यावत्, इति पञ्चमवेदेऽपि, 'भारतः पञ्चमो वेदः' इति प्रसिद्धभारतरूपपञ्चमवेदेऽपि सर्वसारार्थः= सर्वधर्मशास्त्रसारार्थः ईरितः ।। ६२ ।।

**(अव)** ननु? प्रपन्नानां निषिद्धानुष्ठानेऽप्यलेपवादो यद्यपि न युक्तः; पूर्वाचार्यानभिमतत्वात्, निषिद्धानुष्ठानेऽपि पुनः प्रपदनमसाम्प्रतं, 'सकृदेव प्रपन्नाय' इति सकृत्त्वविधानात्, किन्तु पूर्वप्रपत्तिस्मरणमेव तन्निष्कृतिरिति आप्तैरेवाभिधानात् तत्कथमित्यत्राह-

**प्रपत्तिप्रतिसन्धानमाप्तैर्यदुपदिश्यते ।**

**तत् स्वाधिकारनियतहानोपादानसिद्धये ।। ६३ ।। इति ।।**

अस्यार्थः-प्रपत्तिप्रतिसन्धानं; प्रागनुष्ठितप्रपदनस्य स्मरणमेव, प्रायश्चित्तमिति शेषः, आप्तैः आचार्यैः, यदुपदिश्यते, तत्= आप्तानामुपदेशनं स्वाधिकारनियतहानोपादानसिद्धये; स्वस्य= प्रपन्नस्याधिकारनियतस्य= आकिञ्चन्याधिकारव्यवस्थितस्य प्रायश्चित्तस्य पुनःप्रपदनरूपस्य हानसिद्धये, अबुद्धिपूर्वोत्तराघे अश्लेषश्रवणात् तस्य हानं= अकर्तव्यता, धीपूर्वोत्तराघे चोपादानं- तस्य पुनःप्रपदनस्य कर्तव्यता, तदुभयसिद्धिरेव तेषां तात्पर्यविषयार्थः इति।। ६३ ।।

**(अव)** तदेव स्फुटं दर्शयति-

**प्रतिसन्धानतोऽपि स्यादधीपूर्वेष्वलेपधीः ।**

**बुद्धिपूर्वेष्वपि पुनः प्रपत्तेरेव संग्रहः ।। ६४ ।। इति ।।**

अस्यार्थः-प्रतिसन्धानतोऽपि; पूर्वप्रपत्तिस्मरणादपि, अधीपूर्वेषु; प्रामादिकेषु, अलेपधीः, अश्लेषबुद्धिः, बुद्धिपूर्वेष्वपि पुनःप्रपत्तेरेव संग्रहः, एवकारस्य व्यवच्छेद्यं पूर्वप्रपत्तिस्मरणं, नतु शक्तावपि प्रतिपदोक्तानुष्ठानं इति भावः ।। ६४ ।।

**(अव)** उक्तमर्थं निष्कृष्याह -

**अतो निरपराधेन वर्तितव्यं कृतात्मना ।**

**अपराधप्रसङ्गे च पुनःप्रपदनं क्षमम् ।। ६५ ।। इति ।।**

स्पष्टोऽर्थः ।। ६५ ।।

**(अव)** ननु ?प्रपन्नेन निरपराधेन वर्तितव्यमित्युक्तं; भवत्वेवं, नित्यनैमित्तिकानां अग्निहोत्रेष्टिपशुबन्धसप्तसंस्थादीनां स्मार्तादीनां च बहूनां बहुवित्तव्ययायाससाध्यतया कथं यावतामनुष्ठानं? अनुष्ठाने वा स्वर्गादिफलानां मोक्षविरोधिनां निषिद्धानुष्ठाने पापद्वारा नरकादिवत् सिद्धिस्स्यादित्यत आह-

**आहारग्रहमन्त्रार्थजात्यादिनियमैर्युतः ।**

**कुर्याल्लक्ष्मीशकैङ्कर्यं शक्त्याऽनन्यप्रयोजनः ।। ६६ ।। इति ।।**

अस्यार्थः-आहारग्रहमन्त्रार्थजात्यादीनां नियमैः, तत्र-आहारनियमः "जात्या-

श्रयनिमित्तादुष्टादन्नात् कायशुद्धिः'' इत्युक्तः । ग्रहनियमः; सत्सन्तानप्रसूतसदाचारनिष्ठवेदविदाचार्यादेव ग्राह्यमित्यादिनियमः । मन्त्रनियमः; देवतान्तरमन्त्रान् काम्यसाधनभगवन्मन्त्राननन्यांश्च व्यापकेतरमन्त्रांश्च वर्जयित्वा मूलमन्त्रद्वया-दिमन्त्रैरेव जपः कार्य इत्यादिरूपः । अर्थनियमः; 'कुलटा- षण्ड-पतित- वैरिभ्यः काकिणीमपि । उद्यतामपि गृह्णीयान्नापद्यपि कदाचन' ।। इति विगीतेतरः । जातिनियमः; 'ब्राह्मणः परीक्षार्थमपि आयुधं नाददीत' 'न स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा । स्त्रीणां तु शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते', इत्यादिरूपः। आदिशब्दात् वर्णनियमः; याजन-अद्ध्यापन-शस्त्रजीवन-वाणिज्य-शुश्रूषादिरूपः। आश्रमनियमः,'ताम्बूलोऽभर्तृकस्त्रीणां यतीनां ब्रह्मचारिणाम् । एकैकं मांसतुल्यं स्यात् सम्भूय मदिरासमम् ।। ब्रह्मसूत्रं परित्यज्य ब्रह्मचारी गृही वनी । परिव्राड्वापि पतति' इत्यादिरूपः । गोत्रनियमः; 'दानं दद्यात् सगोत्राय कन्यादानं तु वर्जयेत्' इत्यादिरूपः । प्रवरनियमः; 'समप्रवरगोत्रञ्च विधुरं ब्रह्मचारिणम्। देवार्थे वरयेद्विद्वान् पित्रर्थे न कदाचन' इति । चरणनियमः, 'बह्वृचाश्श्रवणे कुर्युः श्रावणं नतु पर्वणि' इति । कुलनियमः; 'मृतबन्धोर्दशाहानि कुलस्यान्नं निषिद्ध्यते' इति । देशनियमः; 'नाप्सु नैवाम्भसस्तीरे श्मशाने न समाचरेत् । उत्सर्गं वा पुरीषस्य मूत्रस्य च विसर्जनम् ।।' इति कालनियमः; 'न भोक्तव्यम् न भोक्तव्यम् सम्प्राप्ते हरिवासरे' इति । अवस्थानियमः; 'एकादश्यां न भुञ्जीत शक्तस्सन् निरुपद्रवः' इति। गुणनियमः; 'नातिकेशामकेशां वा नातिकृष्णातिपिङ्गलाम् । निसर्गतोऽधिकाङ्गां वा हीनाङ्गामपि नोद्वहेत्, आरनालं न सेवेत कदाऽपि भगवत्परः' इत्यादिरूपः । उक्तनियमैर्युतः प्रपन्नः शक्त्या; यथाशक्ति अनन्यप्रयोजनः; प्रयोजनान्तरनिस्स्पृहः, भगवत्प्रीत्येकप्रयोजनस्सन् लक्ष्मीशकैङ्कर्यं कुर्यात्, अतो नोक्तशङ्काद्वयावकाशः, इति भावः ।। ६६ ।।

**(अव)** सदाचारस्याधिकारिणि अतिशयाधायकत्वञ्चास्ति, न केवलं स्वव्यतिरेके अयोग्यतावहत्वमित्याह-

**आचारात्मगुणोपायपुरुषार्थविशेषतः ।**
**अधिकारिणि वैशिष्ट्यं प्रकृष्येतोत्तरोत्तरम् ।। ६७ ।। इति ।।**

अस्यार्थः- अधिकारिणि; मोक्षोपायानुष्ठानपरे, वैशिष्ट्यं; विशिष्टत्वं, अतिशयितं, आचारात्मगुणोपायपुरुषार्थविशेषतः, आचार-विशेषतः; सन्ध्याद्या-चारप्रकर्षात् । आत्मगुणविशेषतः आत्मगुणादीनां । शमदमादीनां प्रकर्षात्, उपायविशेषतः; भक्त्याद्युपायनिष्ठायाः 'सत्कर्मनिरताश्शुद्धास्साङ्ख्ययोगविदस्तथा । नार्हन्ति शरणस्थस्य कलां कोटितमीमपि' इति कृष्णप्राप्तौ कृष्णैकसाधनस्याति-शयितत्वस्मरणात् स्वतन्त्रप्रपदनात् तत्राप्याचार्यनिष्ठारूपात् । पुरुषार्थविशेषतः; प्रयोजनान्तरादपि मोक्षपुरुषार्थस्य तत्राप्यविद्यावृत्तिस्वानन्दावाप्तिरूपपुरुषार्थादपि तच्चरणकैङ्कर्यकामस्यातिशयितत्वाच्चोत्तरोत्तरं प्रकृष्येत; प्रकृष्टं भवेत् ।। ६७ ।।

* * *

# अथ पदवाक्ययोजनाभागः ।।

## तत्र मूलमन्त्राधिकारः ।।

**(अव)** एवं सारतमान् अर्थावश्यज्ञातव्यान् आनुशासनिकभागे विशदीकृत्य, तत्र व्यामोहादिशमनेन तान् स्थिरीकृत्य, तेषामर्थानां रहस्यत्रयप्रतिपाद्यत्वं प्रकाशयितुं योजनाभाग आरभ्यत इति प्रतिज्ञाय, मूलमन्त्र-द्वय-चरमश्लोकानां पूर्वपूर्वस्य व्याख्येयतां उत्तरोत्तरस्य व्याख्यानतां चाभिधाय, प्रथमव्याख्येयेऽपि मूलमन्त्रे प्रणवस्य त्र्यात्मकतां च प्रतिपाद्य,तत्रापि अकारस्य प्रणवाद्यस्य 'अव रक्षणे' इति धातुनिष्पन्नतया रक्षकत्वार्थस्यावच्छेदकासंकीर्तनेन (सर्वरक्षकत्वं तदर्थः) उपाध्यसंकीर्तनेन च निरुपाधिकरक्षकत्वं च पर्यवस्यतीति प्रतिपाद्य , एवं सति निरुपाधिकरक्षकत्वे निर्हेतुककरुणावत्त्वं सेत्स्यति, ततश्च भक्तिप्रपत्त्यादिकं दयोत्तम्भनादावनुपयोगात् निष्प्रयोजनमेव स्यात् तत्कार्यस्य कस्याप्यभावा-दित्याशङ्क्य, ईश्वरस्य निरुपाधिककृपावत्त्वेऽपि तस्याः कृपायाः कर्माधीनभगव-दाज्ञातिलङ्घनजनितभगवन्निग्रहप्रतिबद्धतया तन्निवर्तनेन न्यासादीनामुपयोगात् तेषां

रक्षणे सहकारिकारणत्वं करुणायाः प्रधानकारणत्वं चेति दर्शयन् स्वामित्वात् स्वयमेव स्वद्रव्यं निर्व्याजं रक्षतीति शङ्कामप्यपनुदन्नाह-

**त्राणे स्वामित्वमौचित्यं न्यासाद्यास्सहकारिणः ।**
**प्रधानहेतुः स्वातन्त्र्यविशिष्टा करुणा विभोः ।। ६८ ।। इति ।।**

अस्यार्थः- विभोःस्वामित्वं त्राणे; रक्षणे, औचित्यं; स्वरूपयोग्यतामात्रं, स्वातन्त्र्यविशिष्टकरुणा प्रधानहेतुः; परतन्त्रस्य करुणा विद्यमानाऽपि न त्राणाय कल्पते, अतः- स्वातन्त्र्यविशिष्टेति । नापि केवलं स्वातन्त्र्यं हेतुः निष्करुणे तददर्शनात्, अतः- करुणेति। अप्रतिबद्धायाः करुणायाः फलाविनाभावात् अद्वारकत्वाच्च प्रधानकारणत्वमिति भावः । न्यासाद्याः सहकारिणः, प्रतिबन्धकनिग्रहापनोदनद्वारा तदुपयोगात्, आद्यशब्देन कर्मयोगज्ञानयोगादिपरिग्रह इति ।। ६८ ।।

**(अव)** एवं प्रणवस्यादिभूताकारं निरुपाधिकसर्वरक्षकत्वार्थकमभिधाय, तद्गताया लुप्तायाश्चतुर्थ्यास्तादर्थ्यवाचकत्वात् मकारवाच्यो जीवः परं प्रति शेष इत्यर्थः पर्यवस्यति । तत्र यद्यपि मकारवाच्यः कर्ता प्रथमं निर्देश्यः, तदनन्तरं तस्य परसम्बन्धः, तथाऽपि शेषत्वरूपसम्बन्धज्ञानाभावे विद्यमानमपि स्वरूपम-सत्कल्पं, शेषत्वज्ञानाभावे हि तादृशस्वरूपानुरूपकैङ्कर्यसाम्राज्यरुचितदर्थो-पायानुष्ठानाद्यनर्हत्वादितिसम्बन्धप्राधान्यद्योतनाय कर्तृनिर्देशात् प्रागेव सम्बन्धनिर्देश इत्यभिप्रायेणाह-

**निश्चिते परशेषत्वे शेषं सम्परिपूर्यते ।**
**अनिश्चिते पुनस्तस्मिन् अन्यत् सर्वमसत्समम् ।। ६९ ।। इति ।।**

अस्यार्थः-परशेषत्वे निश्चिते शेषं; स्वरूपानुरूपपुरुषार्थरुचिलक्षणा-धिकारतदनुरूपप्रसदनोपायानुष्ठानादिकं, सम्परिपूर्यते । तस्मिन् =परशेषत्वे अनिश्चिते अन्यत् सर्वं स्वरूपोपायपुरुषार्थादिकं, असत्समम्, असत्प्रायं, तस्मात् प्रधानभूतस्य सम्बन्धस्य प्रथमं निर्देश इति भावः ।। ६९ ।।

**(अव)** एवं प्रणवाद्यस्य अकारस्य सर्वरक्षकत्वमर्थः, तद्गतचतुर्थ्याः

लुप्ताया:तादर्थ्येऽनुशिष्टायाश्शेषत्वमर्थ:, मकारो जीववाची । उकारस्तु अवधारणार्थ: । एवंच जीव: अकारवाच्यस्य भगवत एव शेषभूत इति प्रणवार्थमभिधाय, नम इत्यत्र न म इति पदं भित्त्वा, प्रणवस्थमकारमनुषज्य स्वस्य स्वयमपि न शेषीति जीवस्य स्वं प्रतिनिरुपाधिकशेषत्वव्यावृत्तिपरतया नमश्शब्दं व्याख्याय, यद्वा स्वातन्त्र्यपदमद्ध्याहृत्य- मम निरुपाधिकस्वातन्त्र्यं नास्ति, भगवत एवान्यानपेक्षया निरपेक्षस्वतन्त्रत्वमिति योजनान्तरमप्युक्त्वा, उक्तार्थद्वयस्यसारत्वं साम्प्रदायिकत्वं अधिकारसिद्धिप्रयोजकत्वं च श्लोकद्वयेनाह-

**श्रीमान् स्वतन्त्र: स्वामी च सर्वत्रान्यानपेक्षया ।**
**निरपेक्षस्वतन्त्रत्वं स्वाम्यं चान्यस्य न क्वचित् ।। ७० ।। इति ।।**

**तारस्य नमसश्चेमौ सारौ देशिकदर्शितौ ।**
**अनन्यशरणत्वादेरधिकारस्य सिद्धये ।। ७१ ।। इति ।।**

अनयोरर्थ:-श्रीमान् = श्रीविशिष्ट एव सर्वत्र अन्यानपेक्षया स्वामी= अनन्याधीनशेषित्ववानित्यर्थ: । अन्यानपेक्षया स्वतन्त्र:=अनन्याधीनस्वतन्त्र इत्यर्थ: । शेषित्वं नाम-स्वगतातिशयाधानेच्छयोपादातृत्वं, परगतातिशयाधानेच्छयोपादेयत्वं शेषत्वं, स्वतन्त्रत्वं नाम यथेष्टविनियोजकशक्तिमत्त्वं, परतन्त्रत्वञ्च यथेष्टविनियुज्यमानत्वं, यद्यपि जीव: पुत्रदारादिकं प्रति शेषी स्वतन्त्रश्च, तथाऽपि तस्य भगवदधीनमेव स्वसम्बन्धिवर्गं प्रति शेषित्वं स्वातन्त्र्यञ्च, भगवतस्तु अनन्याधीनं शेषित्वं स्वातन्त्र्यं च इति भाव: । अनन्यस्य जीवस्य क्वचिदपि निरपेक्षं स्वामित्वं स्वातन्त्र्यं च न, निरपेक्षत्वं स्वाम्येऽपि विशेषणम् ।। ७० ।।

तारस्य; प्रणवस्य पूर्वार्धप्रतिपादितभगवच्छेषित्वस्वतन्त्रत्वतात्पर्यरूपस्सार: नमसश्चोत्तरार्द्धप्रतिपादिततदुभयव्यावृत्तिरूपस्सारश्च, इमौ सारौ इति पदाभ्यां विवक्षितौ, देशिकदर्शितौ; देशिकै:= आचार्यैरुपदिष्टौ= अनन्यशरणत्वादे: अनन्योपायत्वादे: । आदिशब्देनानन्यप्रयोजनत्वं, अधिकारस्य आकिञ्चन्याधिकारस्य सिद्धये देशिकदर्शिताविति पूर्वत्र सम्बन्ध:, स्वातन्त्र्याभावे परतन्त्रस्य स्वातन्त्र्यविशिष्टशेषिणं विना शरणान्तराभावात् तत्कैङ्कर्यरूपप्रयोजनाभावादुपायान्तरेषु

सामर्थ्यस्य भगवतापि अदत्तत्वात् अनन्योपायत्वं, भगवच्छेषत्वाच्च तच्छेषवृत्ति-रूपकैङ्कर्यैकप्रयोजनवत्त्वञ्चेति भावः ।। ७१ ।।

**(अव)** प्रणवे तावदकारस्य सर्वरक्षकत्वं तदुत्तरचतुर्थ्याश्चान्यानपेक्ष-सर्वशेषित्वं तस्या एव विभक्तेःस्वशेषभूतपदार्थविनियोगपर्यन्तविवक्षायामन्यानपेक्षं स्वातन्त्र्यं अर्थ इति स्थितम्, तत्सम्बन्धिनो मकारवाच्यस्य जीवस्य भगवच्छेषत्वं तत्पारतन्त्र्यञ्च सिद्ध्यत् तदीयशेषत्वपारतन्त्र्यपर्यन्तमपि सिद्ध्यति तत्काष्ठाभू-तत्वात् इत्यभिधाय, तदपि भगवद्भक्तशेषत्वं भगवत्स्वातन्त्र्यमात्रकृतं, नत्वस्मदि-च्छायत्तं, अस्माकं तदधीनत्वात्; किं बहुना भगवतोऽपि स्वभक्तशेषत्वमस्ति किमु वक्तव्यं भागवतानां, इयांस्तु भेदः-भगवतः स्वभक्तशेषत्वं स्वेच्छाधीनं, भागवतानां तु भगवत्पारतन्त्र्यकृतमिति । यत्र स्वापेक्षितगुणातिशयवन्तो भागवताः तानवलोक्य स्वस्य तत्सेवापेक्षा स्वत एव जायते तत्र भगवत्पारतन्त्र्य । कृतसर्वसाधारणशेषत्वादन्यदपि गुणकृतमपि शेषत्वं सम्भवतीति श्लोकद्वयेनाह-

**स्वेच्छयैव परेशस्य तादधीन्यबलात्तु नः ।**
**भगवद्भक्तशेषत्वं स्वेच्छयाऽपि क्वचिद्भवेत् ।। ७२ ।।**

**गुणाधिके हि विषये गुणसारस्यवेदिनः ।**
**रामे रामानुजस्येव दास्यं गुणकृतं भवेत् ।। ७३ ।। इति ।।**

अनयोरर्थः- भगवत्भक्तशेषत्वं, कर्तृ, परेशस्य; भगवतः, स्वेच्छयैव; स्वसङ्कल्पेनैव, नः, अस्माकं तु, तादधीन्यबलात्; भगवत्परतन्त्रत्वबलात्, भवेत्-क्वचिद्विषये स्वेच्छयाऽपि भवेत् ।। ७२ ।।

तत्कुत इत्यत्राह- गुणाधिके हि विषय इति। हि हेतौ । यस्मात् गुणाधिके विषये भगवद् भक्ते गुणसारस्यवेदिनः; गुणानां सारस्यं=सरसता रसावहत्वं रसकरत्वमिति यावत् । तद्वेदिनः पुरुषस्य, दास्यं=दासस्य भावः, कर्म, वा गुणकृतं= गुणपरिज्ञानजन्यं स्वेच्छाकृतं भवेत् । तत्र दृष्टान्तमाह, रामे; रामविषये, रामानुजस्येव; लक्ष्मणस्येव, 'अस्याहमवरो भ्राता गुणैः दास्यमुपागतः' इति हि

तद्वचनं, तत्र यथा स्वेच्छामन्तरेण किञ्चिद्दास्यं भ्रातृत्वप्रयुक्तमीश्वरेच्छयैव सिद्धम्, अन्यत्तु गुणकृतं, तद्वदिति भावः । ननु? गुणसारस्यपरिज्ञानकृतमपि दास्यं भगवत्पारतन्त्र्यकृतं भवत्येव, सर्वस्यापि भगवत्प्रेरणं विना असंभवात् । यच्च भगवत्पारतन्त्र्यमात्रप्रयुक्तं सर्वसाधारणं भगवद् भक्तशेषत्वं तदपि भगवत्भक्तत्वरूपगुणानुसन्धानप्रयुक्त स्वेच्छाजन्यं वक्तव्यं, अतःकोऽनयोर्विशेष इति चेदुच्यते- यद्यपि भगवद्भक्तत्वरूपगुण-मात्रानुसन्धानहेतुकं तदपि शेषत्वं, तथाऽपि भगवद् भक्तिव्यतिरित्तज्ञानानुष्ठान भगवदनुभवशिष्यानुकम्पित्वसौलभ्यसौशील्याद्यनुसन्धानकृतत्वाभावात् तस्य इति वैलक्षण्यमुभयोर्द्रष्टव्यम् ।। ७३ ।।

**(अव)** भगवान् स्वभक्तविषये स्वात्मानं शेषत्वेन विनियुङ्क्ते इत्युक्तम् तत्कुत्र दृष्टमित्यत्र कृष्ण(भगवत्)वाक्यमेव दर्शयन्नुपपादयति-

**दास्यमैश्वर्ययोगेन ज्ञातीनां च करोम्यहम् ।**
**अर्धभोक्ता च भोगानां वाग्दुरुक्तानि च क्षमे ।। ७४ ।।**

**इति स्वोक्तिनयादेव स्वभक्तविषये प्रभुः ।**
**आत्मात्मीयस्य सर्वस्य सङ्कल्पयति शेषताम् ।। ७५ ।।** इति ।।

अनयोरर्थः-अहम् दास्यमैश्वर्ययोगेन; स्वातन्त्र्ययोगेन, स्वातन्त्र्यादि -त्यर्थः । ज्ञातीनां च दास्यं करोमि । चकारेण भक्तेषु पारतन्त्र्यं "अहं भक्तपराधीन" इति वचनसिद्धम् समुच्चीयते, भोगानामर्धभोक्ता ज्ञातीनामर्धं दत्त्वा तदवशिष्टार्ध भोक्तास्मि । वाग्दुरुक्तानि; वाचां दुरुक्तानि+ उपालम्भधिक्कारादिरूपाणि च क्षमे- सर्वत्रापि हेतुस्स्वातन्त्र्यं, ज्ञातित्वरूपसम्बन्धसामान्यमात्रेणापि दासवत् पारतन्त्र्यं राज्यार्धप्रदानं उपालम्भसहनं च करोमि,किमुत 'ज्ञानी त्वात्मैव मे मतम्' 'स च मम प्रियः' इत्यादिरीत्या अत्यर्थप्रियातमानामिति भावः ।। ७४ ।।

इति स्वोक्तिनयादेव प्रभुः स्वतन्त्रः स्वभक्तविषये सर्वस्यात्मात्मीयस्य आत्मा चात्मीयञ्चेति समाहार एकवद्भावः। शेषताम्; भक्तजनं प्रति शेषतां सङ्कल्पयति । तदुक्तं 'परिजनपरिबर्हा भूषणान्यायुधानि प्रवरगुणगणाश्च

ज्ञानशक्त्यादयस्ते । परमपदमथाण्डान्यात्मदेहस्तवात्मा वरद सकलमेतत् संश्रितार्थं चकर्थ' इति ।। ७५ ।।

**(अव)** एवमन्योन्यशेषभावस्य प्रमाणसिद्धत्वेऽपि परस्परं शेषशेषिभावो विरुद्ध्यत एव, न ह्येक एव यं प्रति शेषः तं प्रति शेषी च भवतीत्यत्राह-

**अन्योन्यशेषभावोऽपि परस्वातन्त्र्यसम्भवः ।**
**तत्तदाकारभेदेन युक्त इत्युपपादितम् ।। ७६ ।। इति ।।**

अस्यार्थः- परस्वातन्त्र्यसम्भवः; परस्यस्वामिनः स्वातन्त्र्यबलादेव सिद्धः अन्योन्यशेषभावः= भागवतानामन्योन्यशेषभावः । अपिशब्देन शेषिभावश्च परगतातिशयाधायकत्वेन वेषेण शेषत्वं तत्कृतातिशयभाक्त्वेन शेषित्वं; यथा वा क्रियां प्रत्येकस्यैव शेषत्वं, शेषित्वं च प्रागेवोपपादितं पुरुषार्थकाष्ठाधिकार इति ।। ७६ ।।

**(अव)** एवं तारनमसोस्सारार्थावनन्यार्हतदीयपर्यन्तशेषत्व -पारतन्त्र्यात्मकौ देशिकदर्शितौ इत्यभिधाय, नम इत्यस्य अहिर्बुद्ध्न्येन च स्थूलसूक्ष्मपररूपेण त्रिधा विभज्य दर्शिताश्चार्थाःप्रह्वीभाव- ममतात्यागपरमेशप्रधानोपायात्मका इत्यपि प्रतिपाद्य, एवमनुष्ठेयार्थप्रकाशकनमश्शब्दघटितत्वे स्वात्मसमर्पणे सर्वे मन्त्राः करणतां यान्ति, न केवलमष्टाक्षर एवेत्याह-

**एवं शिक्षितनानार्थनमश्शब्दसमन्विताः ।**
**सर्वे करणतां यान्ति मन्त्रास्स्वात्मसमर्पणे ।। ७७ ।। इति ।।**

स्पष्टोऽर्थः ।। ७७ ।।

**(अव)** नन्वकारार्थाय मकारवाच्यश्शेषः मकारवाच्यस्य मकारवाच्यो न शेषः इति तारनमसोरर्थ उक्तः, एवं सति अकारार्थस्य स्वमहं न मम इत्यनुसन्धानं न स्यात्, तस्यैवानुसन्धानस्यात्रावश्यकत्वात् स्वात्मसमर्पणे स्वात्मन एव तादर्थ्यं ह्यनुसन्धेयं, नत्वन्यस्येत्यत आह-

**जीवसामान्यमुखतःशृङ्गग्राहिकयाऽपि वा ।**
**मकारौ तारनमसोस्स्वानुसन्धानदाविह ।। ७८ ।। इति ।।**

अस्यार्थः- तारनमसोःमकारौ जीवसामान्यमुखतःजीवसामान्यद्वारा जीवसामान्यस्य शेषत्वविधाने तदंतर्गतस्वात्मरूपविशेषस्यापि क्रोडीकारात् 'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः । अतोऽहमपि ते दासः' इत्युक्त क्रमात् सामान्यद्वारा स्वानुसन्धानादौ शृङ्गग्राहिकयाऽपि वा सामान्यशब्दस्य विशेषपरत्वमाश्रित्य वा स्वानुसन्धानादौ, 'अर्थात् प्रकरणाल्लिङ्गादौचित्यात्' इति न्यायेन गामानयेत्यादौ सन्निहिततत्तद्व्यक्तिपरत्वदर्शनाच्च अस्मच्छब्दस्य पूर्वोत्तरभागलोपेन मकारमात्रावशिष्टत्वेन निरुक्तसिद्धत्वाद्वा स्वानुसन्धानादौ मकारौ इति भावः ।। ७८ ।।

**(अव)** ननु; एवं आत्मसमर्पणं कुर्वत एव मकारार्थत्वात् तं प्रत्येव अकारार्थस्य कमलापतेःशरण्यत्वं तारनमोभ्यां प्रतिपाद्यते, अतःतदन्ये जीवास्स्वतन्त्रा एव सिद्ध्येयुः । युक्तं चैतत्-प्रत्यक्षादिप्रमाणैः अन्योन्यरक्ष्यरक्षकभाव एव जीवानां प्रतिपन्नः यदि च जीवानां सर्वेषां भगवच्छेषत्वपारतन्त्र्यसिद्ध्यर्थं मकारस्य जीवसामान्यवाचकत्वमुच्येत, तदा स्वानुसन्धानं न सेत्स्यतीति सेयमुभयतः पाशा रज्जुरित्यत आह-

**इह या स्वानुसन्धानप्रक्रियैकस्य दर्शिता ।**
**अन्येषामपि तत्साम्यान्नान्योन्यशरणा इमे ।। ७९ ।। इति ।।**
**अतस्स्वपररक्षायां पराधीनेषु जन्तुषु ।**
**निरपेक्षशरण्यत्वं नियतं कमलापतौ ।। ८० ।। इति ।।**

अनयोरर्थः- इह= मन्त्रे या स्वानुसन्धानप्रक्रिया शृङ्गग्राहिकया विशेषपरत्वाश्रयणेन एकस्य स्वात्मसमर्पणं अनुतिष्ठतः, दर्शिता अन्येषामपि तत्साम्यात्= जीवत्वसाम्यात् जीवत्वप्रयुक्तं भगवच्छेषत्वं बहुप्रमाणसिद्धमवर्जनीयमिति इमे जीवा नान्योन्यशरणाः ।। ७९ ।।

अतः; नमश्शब्देन अन्योन्यनिरपेक्षशरण्यत्वनिषेधात् स्वपररक्षायां स्वस्य; आत्मनः, परेषां पुत्रदारादीनां रक्षायां, जन्तुषु जीवेषु पराधीनेषु ईश्वरायत्तरक्ष्यरक्षकभावेषु सत्सु निरपेक्षशरण्यत्वं, अनन्याधीनशरण्यत्वं कमलापतौ नियतं=

तत्रैव विश्रान्तं, अतः स्वमात्रानुसन्धानेऽपि श्रीपतेरेव शरण्यत्वमित्यत्र न विरोध इति भावः ।। ८० ।।

**(अव)** अथ नारायणशब्दनिर्वचनप्रस्तावे नरशब्दस्य क्षयिष्णुत्वाभावोऽर्थः स्वरूपान्यथाभाववतामचेतनानां स्वभावान्यथाभाववतां चेतनानां च क्षयिष्णुतया नरशब्देन भगवत एव वाच्यत्वात्, नराज्जातानि तत्त्वानि नाराणि तेषामयनमधिकरणं नारा अयनं यस्येति सर्वव्यापकः नारा जीवसमूहाः तेषां अयनं, ईयते अनेनेति करणव्युत्पत्त्या सर्वेषामुपायः नाराणां अयनं ईयते इत्ययनं इति कर्मव्युत्पत्त्या सर्वेषामुपेयः, नरसम्बन्धिनो नारा इति कल्याणगुणादीनामपि परामर्शात् सकलकल्याणगुणाश्रयः इत्यनेकार्थत्वं प्रमाणवचनपुरस्कारेण नारायणशब्दस्य प्रतिपाद्य, ब्रह्ममीमांसाचतुरध्यायीप्रतिपादितकारणत्वाबाद्ध्यत्वोपायत्वोपेयत्वात्म-कार्थचतुष्टयगर्भितत्वं नारायणपदस्येत्याह-

**कारणत्वमबाद्ध्यत्वमुपायत्वमुपेयता ।**
**इति शारीरकस्थाप्यमिह चापि व्यवस्थितम् ।। ८१ ।। इति ।।**

अस्यार्थः- कारणत्वं 'जन्माद्यस्य यतः' इत्यखिलजगत्कारणत्वं जिज्ञासित-ब्रह्मलक्षणं प्रतिज्ञाय, अस्पष्टजीवलिङ्गानां स्पष्टजीवलिङ्गानां प्रधानप्रतिपादनच्छायानुसारिणां च सर्वेषां वेदान्तानां ब्रह्मैवाखिलजगत्कारणमित्यत्र तात्पर्यमिति प्रथमाध्यायार्थ इति तदिदमत्रापि नारशब्दे नराज्जातानि तत्त्वानीति व्युत्पत्त्याश्रयणे-स्फुटमिति भावः । अबाध्यत्वमुक्तजगत्कारणत्वस्य सांख्यादिमतान्तरैः दुर्धर्षणत्वं द्वितीयाध्यायार्थः । सचायमत्रापि नारशब्दस्य कल्याणगुणप्रतिपादकत्वाभ्युपगमेन कारणवाक्येष्वेव 'तदैक्षत बहु स्यां प्रजायेये' ति 'यस्सर्वज्ञस्सर्ववित्' 'यस्य ज्ञानमयं तपः' इत्यादिषु सर्वज्ञत्वाद्यवगमात् अचितस्तदसंभवात् जीवानां च सर्वज्ञत्वाद्यनु-पपत्तेश्चेति नातिव्याप्तं ब्रह्मलक्षणमिति हेत्वन्तरैः दुर्धर्षणत्वरूपो द्वितीयाध्यायार्थो गर्भित इति भावः, उपायत्वं उपास्यत्वप्रतिपादकं तृतीयाध्यायार्थ इति अयन शब्देन करणल्युडंतेनाभिधीयते इति भावः । उपेयता शरीरपातादूर्ध्वमार्चिरादिना प्राप्यत्वं हि चतुर्थाध्यायार्थः । सोऽप्ययनशब्देन कर्मणि ल्युडन्तेनाभिधीयत इति भावः ।

इत्युक्तचतुष्टयं शारीरकस्थाप्यं= शारीरकशास्त्रेण स्थाप्यं, तदिह चापि= नारायणशब्देऽपि तत्तद्व्युत्पत्तिभेदेनव्यवस्थितम् । च अपि, इत्येतत्समुच्चये।। ८१ ।।

**(अव)** अथ प्रतिपदं पृथक् पृथगर्थानुक्त्वा शाब्दान् आर्थांश्च भगवद्धर्मान् क्रमात् संगृह्योक्त्वा तेष्वपि सारतमाः कतिचिन्नित्यानुसन्धेया इत्याह-

**इह संग्रहतःश्रीमान् गोप्ता शेषी समाधिकदरिद्रः ।**

**शरणं सर्वशरीरी प्राप्यस्सेव्यश्च साधुभिर्भाव्यः ।। ८२ ।।** इति ।।

अस्यार्थः- इह; मन्त्रे,श्रीमान् गोप्ता= अकारार्थस्सर्वरक्षकत्वं 'अव रक्षण' इत्यवधातोरप्प्रत्यये 'अवतेष्टिलोपश्चेति' टिलोपादकारमात्रपरिशेषात्, तच्च रक्षकत्वं लक्ष्मीविशिष्टस्यैव 'लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकस्सर्वसिद्धान्ते 'इति प्रतिपादनात् । तं प्रकृत्यर्थं श्रीमान् गोप्तेति सूचयन् प्रत्ययार्थमाह- शेषीति ।। तादर्थ्ये चतुर्थ्यनुशासनात् । श्रीमान् इत्येतदत्राप्यन्वेति ''उभयाधिष्ठानं चैकं शेषित्वम्'' इत्युक्तेः, प्रकृतिप्रत्ययाभ्यां फलितमाह-समाधिकदरिद्र इति। निस्समाभ्यधिक इत्यर्थः । निरुपाधिकसर्वरक्षकत्व । तादृशसर्वशेषित्वयोरितत्रा-सम्भवात् । 'अस्येशाना जगत' इति श्रुतिप्रसिद्धलक्ष्मीपतित्वस्फोरितपारम्यस्यान्यत्रा-सम्भवाच्च नमश्शब्दार्थमाह-'शरणमिति । पन्था नकार उद्दिष्टो मःप्रधान उदीरितः । विसर्गः परमेशस्त्विति' नैरुक्तिकप्रक्रियया मे न किञ्चिद्वस्तु मे न स्वातन्त्र्यमित्यन्वये तदीयस्य तत्परतन्त्रस्य तं विनेष्टप्रापको नेति स एव शरणमित्याक्षेपेण वा शरणं भगवानेवेति भावः । नारायणशब्दप्रकृत्यर्थमाह-सर्वशरीरीति । नाराः अयनं यस्येति बहुव्रीहौ ल्युटश्च अधिकरणार्थत्वेन सर्वान्तःप्रवेशनियमनमर्थ इति भावः, नाराणां अयनमिति तत्पुरुषे ल्युटश्च कर्मार्थत्वे प्राप्यत्वमर्थ इत्यभिप्रयन्नाह-प्राप्य इति । उत्तरचतुर्थ्यर्थमाह- सेव्य इति । सेवारूपकैङ्कर्यप्रतिसम्बन्धित्वादिति भावः सेवायाश्शेष वृत्तित्वात् कैङ्कर्यस्य शेषवृत्तिरूपस्य तादर्थ्यस्य चतुर्थ्यर्थत्वादिति भावः । एवं संग्रहतः=संग्रहेण भाव्यः ।। ८२ ।।

**(अव)** एवं भगवद्धर्माणां मन्त्रार्थानामनुसन्धानमुक्त्वा तत्प्रतिसम्बन्धिनि जीवे चानुसन्धेयान् बहून् धर्मानुपदिश्य तत्राप्यावश्यकान् मन्त्रार्थसारान् जीवधर्मानाह-

**पदत्रयेण संक्षेपात् भाव्याऽनन्यार्हशेषता ।**
**अनन्योपायता स्वस्य तथाऽनन्यपुमर्थता ।। ८३ ।। इति ।।**

अस्यार्थः-प्रणवस्यान्ययोगव्यवच्छेदार्थकोकारप्रश्लेषात् अनन्यार्हशेषता फलितार्थः स्वातन्त्र्यविधानेन अन्वर्थनमसश्च परतन्त्रदासस्य स्वतन्त्रशेषिणं विना शरणान्तरासम्भवात् स एव तस्य शरणमित्यनन्य शरणता फलितार्थः तथाऽनन्यपुमर्थता- नारायणशब्दगतचतुर्थ्याः कैङ्कर्यपरतया शेषभूतस्य शेषिप्राप्तिं विना पुमर्थान्तराभावात् अनन्यपुमर्थता फलितेति पदत्रयेण संक्षेपेण भाव्या।। ८३ ।।

**(अव)** एवमष्टाक्षरान्तःस्थतत्त्वार्थज्ञानवतां बाह्यकुदृष्टिपक्षैरक्षोभ्यत्वं द्वन्द्वज परितापादिराहित्यञ्चास्तीति प्रशंसति-

**इह निजपक्षविरुद्धैरीदृशनिष्ठाविरोधिभिश्चान्यैः ।**
**द्विचतुष्कसारवेदी गङ्गाह्रद इव न गच्छति क्षोभम् ।। ८४ ।। इति।।**

अस्यार्थः- इह= भुवने, निजपक्षविरुद्धैः, बाह्यकुदृष्टिपक्षैः देहात्मवादिबौद्धजैनतार्किकनिरीश्वरसेश्वरसांख्यमृषावादिभेदाभेदब्रह्मपरिणामिशैव माध्वादिभिरुक्तमन्त्रार्थविरुद्धैः ईदृशनिष्ठाविरोधिभिरन्यैश्च मन्त्रान्तरदेवतान्तरप्रयोजनान्तरस्पर्शैर्विषयान्तरपरिचयादिभिःमानावमानजपरितापादिभिर्वा; द्विचतुष्कसारवेदी; अक्षराणां द्विचतुष्कं= अष्टकं, तद्वेदी= तद्ज्ञानवान् गङ्गाह्लद इव क्षोभं न गच्छति= न प्राप्नोति, तदुक्तं 'न प्रहृष्यति सम्माने नावमानेऽनुतप्यते ।। गङ्गाह्लद इवाक्षोभ्यः यस्स पण्डित उच्यते ।।' ८४ ।।

**(अव)** अत्र नारायणायेत्यत्र स्यामित्यध्याहृत्य तादर्थ्यचतुर्थीसमभिव्याहारात् तदर्थो भवेयं इति प्रार्थ्यमानं तादर्थ्यं न शेषत्वरूपं; तस्य स्वतस्सिद्धत्वात्, अतःशेषित्वं; शेषकर्म, कैङ्कर्यमिति यावत् । एवञ्च कैङ्कर्यप्रार्थनायां स्वानन्दावाप्तिरूपपुरुषार्थो न मन्त्रार्थस्स्यात्, स्वानन्दावाप्तेः प्रार्थना स्वार्थभोग प्रार्थना स्यादित्यत आह-

**अत्र स्वलाभापेक्षाऽपि स्वामिलाभावसाधिनी ।**
**स्वामिप्रयोजनापेक्षाऽप्यतस्स्वानन्दहेतुका ।। ८५ ।। इति ।।**

अस्यार्थः-अत्र; चतुर्थ्यां स्वलाभापेक्षाऽपि स्वानन्दलाभप्रार्थनाऽपि, स्वामिलाभावसायिनी स्वभोगेनापि परगतातिशयस्यैव सिद्धेः स्वलाभ एव स्वामिलाभपर्यवसायीति न स्वार्थभोगप्रार्थनादोषः । स्वामिप्रयोजनापेक्षा अपि स्वानन्दहेतुका, स्वानन्दलाभादेव हि स्वामिनः प्रयोजनसिद्धिः भृत्यानां सुखवत्तया हि स्वामिनोऽतिशयः, अतः स्वलाभप्रार्थनाऽपि स्वाम्यतिशयप्रार्थनावसायिनी, साऽपि स्वलाभप्रार्थनावसायिनीति एकैकप्रार्थनायामपि द्वयोः प्रयोजनसिद्धिरिति भावः ।। ८५ ।।

**(अव)** अत्र केचिदाक्षिपन्ति- नमश्शब्देन स्यादित्यध्याहारसहितेन न मम किञ्चित्स्यादित्यर्थपर्यवसन्नेन अविद्याकर्मवासनारुचि प्रकृतिसम्बन्धादिरूप सर्वानिष्टनिवृत्तिप्रार्थनायां कृतायां इष्टप्राप्तिप्रार्थना किमर्था । 'सम्पद्याविर्भावः स्वेनशब्दात्' ''यथा न क्रियते स्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ।। यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः ।। तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते, न जन्यन्ते, नित्या एवात्मनो हि ते'' इत्युक्तरीत्या इष्टप्राप्तिः स्वयमेवागच्छति ।किमर्थं तत्प्रार्थनमिति; तत्रोत्तरमाह-

**मू- स्वतःस्वार्हं यथा भागं पुत्रःपितुरपेक्षते ।**
**सापराधस्तथा दासः कैङ्कर्यं परमात्मनः ।। ८६ ।। इति ।।**

अस्यार्थः- यथा सापराधः पुत्रःस्वतःस्वार्हं भागं स्वत एव; पुत्रत्वेनैव, प्राप्तं स्वयोग्यं दायं पितुस्सकाशादपेक्षते,तथा सापराधो दासः परमात्मनस्सकाशात् स्वतःप्राप्तं दासत्वेन स्वयोग्यं कैङ्कर्यं अपेक्षते; प्रार्थयते। सापराधतो निग्रहकलुषितेन पित्राऽनर्पितत्वादपराधक्षमापणप्रसन्नात्तस्मादर्थनमपि लोकन्यायाविरुद्धमिति भावः ।। ८६ ।।

**(अव)** ननु भावान्तरमेवाभावो न सप्तमपदार्थरूपोऽन्य इति ह्यास्माकीनः सिद्धान्तः । अत एव भाष्यकारैरपि ''अविद्यानिवृत्तिरेव मोक्षः'' इत्युक्तं, अतः सर्वप्रतिकूलनिवृत्तिरेव ह्यत्यन्तानुकूल्यावस्थारूपो मोक्ष इत्यनिष्टनिवृत्तिप्रार्थनादेवेष्टप्रार्थनं जातमिति पुनरुक्तिःस्यादित्याशङ्क्याह-

**मू- एकमेव स्वरूपेण परेण च निरूपितम् ।**
**इष्टप्राप्तिरनिष्टस्य निवृत्तिश्चेति कीर्त्यते ।। ८७ ।। इति ।।**

अस्यार्थः- एकमेव वस्तु स्वरूपेण निरूपितं= प्रतियोगिज्ञानादिकमनपेक्ष्यैव वस्तुनःस्वरूपमात्रेण निरूपितम्, भावरूपं, तदेव परेण; प्रतियोगिना च, निरूपितं अभावरूपं, अत एकत्वेऽपि निरूपकभेदात्, यथा घटः, पटाद्भिन्नः, अयं अस्माद्दीर्घः- इत्यपौनरुक्त्यं अपर्यायत्वञ्च, तथा एकमेव वस्त्विष्टप्राप्तिरनिष्टनिवृत्तिश्चेति कीर्त्यते । अयं भावः- अनिष्टनिवृत्तिं प्रार्थयमान एवादरातिशयादिष्टप्रार्थनमपि करोति । प्रकारान्तरेण प्रार्थने पौनरुक्त्यमपि नास्ति इति ।। ८७ ।।

**(अव)** अथ वाक्यार्थयोजनाः दशधा कृताः, कृत्स्नमन्त्रोऽप्येकवाक्यस्सन् फलपरः, कृत्स्नमन्त्रोऽप्येकवाक्यस्सन्नुपायपारः, आहत्यैकवाक्यतायां योजनाद्वयम् । द्विवाक्यस्सन् स्वरूपपरः, तथा उपायपरः, तथा फलपरः, आहत्य द्विवाक्यतायां योजनात्रयम् । पुनस्त्रिवाक्यस्सन् स्वरूपफलपरः तत्राप्याद्यवाक्यद्वयेन स्वरूपं तृतीयवाक्येन फलञ्च प्रतिपादयति । यद्वा प्रथमवाक्येनैव स्वरूपं, द्वितीयतृतीयाभ्या- मनिष्टनिवृत्तीष्टप्राप्तिरूपं फलं प्रतिपादयतीत्याहत्य त्रिवाक्यतायां स्वरूपफलपरत्वेन योजनाद्वयं, पुनः त्रिवाक्यस्सन् स्वरूपोपायतत्परः आहत्याष्टौ योजनाः, ताश्च कारिका रूपेणास्माभिस्संगृहीताः ।।

तथाहि- ओमर्थाय नमो नारायणायेत्येकवाक्यता । न्यासोऽत्र नमसोऽ- र्थस्स्यात्तेनोपायपरो मनुः ।। ओमर्थनारायणाय शेषवृत्तिं नमोगिरा । उपलक्ष्य तदेकात्मा कृत्स्नःफलपरो मनुः । अनयोर्योजनयोरखण्डप्रणववाच्यत्वं नारायण- विशेषणम् । आर्थनारायणस्यैव स्वमहं नास्म्यहं मम । इति द्विवाक्ये जीवेशस्वरूपे तत्परो मनुः ।। आर्थनारायणस्याहं भरत्वेनार्पितो न मे । भरोऽस्मीति द्विवाक्यस्सन् उपायैकपरो मनुः ।। आर्थनारायणस्याहं किङ्करस्तद्विरोधि मे । न स्यादिति द्विवाक्यस्सन् पुमर्थैकपरो मनुः ।। आसु तिसृषु योजनासु प्रणवस्त्र्यक्षरात्मा योज्यः, आय नारायणायेति विशेषणविशेष्यभावः, आर्थ इत्यकारार्थ इति नारायण विशेषणत्वं द्योतितम्, आयैवाहं नमो नारायणकैङ्कर्यमस्तु मे । इति त्रिवाक्यो जीवेशस्वरूपफलतत्परः ।। आयैवास्मीत्याद्यवाक्यात् स्वरूपं शेषवाक्ययोः ।

अनिष्टं नश्यतादिष्टं स्यादित्याह त्रिवाक्यतः ।। स्वरूपं तारनमसोरर्थो गोप्तृत्वयाचनम् । शेषस्यातस्त्रिवाक्योऽसौ स्वरूपोपायतत्परः ।। एवमष्टौ योजनाः ।।

नवमीं योजनामाचार्यः स्वकारिकारूपेणाह-

**(मू-) केचित्तु चरमश्लोके द्वये चोक्तक्रमादिह ।**
**भरन्यासपरं तारं शेषं फलपरं विदुः ।। ८८ ।।** इति ।।

अस्यार्थः- चरमश्लोके द्वये च वाक्यत्रयात्मके उक्तक्रमादिहापि भरन्यासपरं, उपायपरं तारं शेषं= नमो नारायणायेति वाक्यद्वयं फलपरं विदुः । इति ।।

इयञ्च दशमी योजना । तारे स्वरूपं नमसि न्यासं शेषे फलार्थनम् । प्राह त्रिवाक्यो मन्त्रोऽयमाहत्यार्था दशेरिताः ।। वाक्यैकत्वे योजने द्वे तिस्रो वाक्यद्वये तथा । वाक्यत्रये पञ्चतय्यः ताः पृथक् पृथगीरिताः ।। ८८ ।। उपसंहरति ।। ८८ ।।

**(मू) तदेवं पदवाक्यार्थैस्तत्त्वविद्गुरुदर्शितैः ।**
**तत्तत्कुदृष्टिकथितं निरस्तं योजनान्तरम् ।। ८९ ।।** इति ।।

तत्; तस्मात् उक्तक्रमेण, तत्त्वविद्गुरुदर्शितैः; तत्त्वविदा आत्रेयरामानुजाचार्येण वादिहंसाम्बुवाहापरनामधेयेन दर्शितैः, पदवाक्यार्थैः पदार्थैः वाक्यार्थैश्च, तत्तत्कुदृष्टि कथितं; योजनान्तरं अकारार्थ सामानाधिकरण्यादभेदपरत्वमित्यादिरूपं निरस्तम् ।। ८९ ।।

**(अव)** स्वाचार्योपदिष्टार्थानां सामीचीन्यं द्योतयितुं आचार्याणामज्ञानादि-राहित्यं सन्मार्गानतिलङ्घित्वं विषयप्रावण्यादिदूरगतत्वं चोपपादयन् उपसंहरति-

**(मू) अविद्याभूतनोन्मुक्तैरनवज्ञातसत्पथैः ।**
**असदास्वादसव्रीडैरादिष्टमिति दर्शितम् ।। ९० ।।** इति ।।

अस्यार्थः- अविद्या; अज्ञानं, प्रकृतिर्वा, सैव पूतना; पिशाची, तदुन्मुक्तैः । अनवज्ञातसत्पथैः असदास्वादसव्रीडैः असतां विषयाणां आस्वादे सव्रीडैः, तत्पराङ्मुखैरित्यर्थः । देशिकैरित्यध्याहारः । आदिष्टं; उपदिष्टं इति= उक्तप्रकारेण दर्शितम्; अस्मदनुग्राह्याणां शिक्षायै अस्माभिर्दर्शितम् ।। ९० ।।

## अथ द्वयाधिकारः ।।

**(अव)** मूलमन्त्रं व्याख्याय तद्व्याख्यानभूतं द्वयं विवरीतुं तत्प्रभावमुक्त्वा द्वयस्य गद्यस्य च व्याख्येयव्याख्यानभावमपि प्रदर्श्य गद्ये फलप्रार्थनावसरे 'परभक्तिपरज्ञानपरमभक्तिकृत परिपूर्णानवरतनित्य विशदतमानन्यप्रयोजनानवधिकातिशय प्रियभगवदनुभवजनिता नवधिकातिशय प्रीतिकारिता शेष अवस्थोचिताशेष शेषतैकरतिरूप नित्यकिंकरो भवानी' ति प्रार्थनोपलम्भात् प्रपत्तेरूद्ध्वं यावज्जीवमनुष्ठेय कैङ्कर्यस्यापि परभक्त्यादिमूलकत्वावश्यं भावात् अकिञ्चनाधिकारिणः प्रपन्नस्य भक्त्याद्यभावात् भावे वा तथैव परभक्त्यामोक्षसिद्धौ प्रपत्ति वैयर्थ्यापत्तिरित्याशङ्क्याह-

**(द्वया)**

**परभक्त्यादिमूलत्वं कैङ्कर्यस्य यदुच्यते ।**
**गद्यादिषु तदप्याहुरपवर्ग दशाश्रयम् ।। ९१ ।। इति ।।**

अस्यार्थः-गद्यादिषु कैङ्कर्यस्य परभक्त्यादिमूलकत्वं यदुच्यते तदप्यपवर्गदशाश्रयमित्याहुः; अपवर्गदशाविषयमाहुः, इदानींतनकैङ्कर्यस्य परभक्त्यादिमूलकत्वपरं न गद्यादिकं, किन्तु, मोक्षदशाभाविनःकैङ्कर्यस्यैव तन्मूलकत्वपरमिति भावः ।। ९१ ।।

**(अव)** ननु ? नित्यमुक्तानुभवस्य ऐकरूप्येण नित्यत्वात्तत्र परभक्त्याद्यवस्थानामनुपपत्तेःकैङ्कर्यस्य तदानीमपि तन्मूलत्व कथनमयुक्तमित्यत आह-

**(द्वया)**

**उत्तरोत्तरयोस्स्वामिसाक्षात्करणभोगयोः ।**
**पूर्वपूर्वक्षणेष्टत्वात्तन्मूलत्वमुदीरितम् ।। ९२ ।। इति ।।**

अस्यार्थः- उत्तरोत्तरयोः, उत्तरोत्तरक्षणावच्छिन्नयोः, स्वामि साक्षात्करण भोगयोःस्वामिसाक्षात्करणं भगवत्साक्षात्कारःतज्जनितः एतादृशोत्यन्तानुकूलविषयो मया दृष्ट इति स्वात्मनिकृतार्थत्वानुसन्धानरूपोनुभवो भोगशब्देन विवक्षितः, तस्यापि निरतिशयप्रीतिरूपत्वात् भगवद्भोगत्वोक्तिः पूर्वपूर्वक्षणेष्टत्वात्; इतः परमप्येवंविधानुभवो मे भूयादित्येवंरूपपूर्वदृष्टविषयकप्रत्यक्षाभिनिवेशत्वस्य

परभक्तित्वस्य पूर्वदृष्टसाक्षात्कारत्वस्य परज्ञानत्वस्य तद्विश्लेषभीतिरूपत्वस्य परम-भक्तित्वस्य चैकरूपानुभवेऽपि पूर्वपूर्वक्षणावच्छेदेन इष्टत्वात्, तन्मूलत्वं= परभक्त्यादिमूलत्वं, साक्षात्कारभोगयोरुदीरितं, यद्यपि सर्वविषयकभगवदनुभव एकव्यक्तिक एव कार्तार्थ्यविषयः भगवद्भोगरूपतामश्नुत इति द्विवचनानुपपत्तिः, तथाऽपि घटपटविषयसमूहालम्बने घटविषयकत्वादिभेदवत् कार्तार्थ्यविषय-कत्वाद्याकारभेदसंभवात् अनेकक्षणावच्छेदसंभवाच्च न द्विवचनानुपपत्तिरित्याहुः ।

अयमत्र निष्कर्षः- साक्षात्करणस्य मुक्तिदशायां कैङ्कर्यरूपभोगस्य च निरन्तरसन्तन्यमानतयैकरूपत्वेन परभक्त्याद्यवस्थापन्नभगवदनुभवमूलकत्वं कैङ्कर्यरूपभोगस्य कथमुच्यत इत्यत्राह-उत्तरोत्तरयोरिति ।।

साक्षात्कारो हि नाम- परभक्तित्वादिसाक्षात्कारः, भोगोऽत्र प्रीति परीवाहजनितपादसंवाहनादिः परिचर्याविशेषः, तयोरत्यन्तभिन्नत्वात् न द्विवचना-नुपपत्तिः, तयोरुत्तरोत्तरयोस्सतोःपूर्वपूर्वक्षणे परभक्त्याद्यवस्थाना मिष्टत्वात्; मोक्षदशायां भगवदनुभवस्य एकस्वभावत्वेऽपि 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ते' 'जक्षत्' 'क्रीडन्' 'रममाणः' स्त्रीभिर्वा, यानैर्वा, इत्यादिष्विवावस्थाविशेषाणामनुभवगताना मभ्युपगमेऽपिविरोधाभावात्,अत एव गद्यभाष्ये 'सांसारिक विकाराणां धर्मभूतज्ञाने स्वतोविकसिते दुर्वचत्वादेकस्व-भावतोक्तिः नतु तादात्विकावस्थाविशेषराहित्यात्' इत्याचार्यैरेव कण्ठोक्तत्वात्, तत्तत्पूर्वक्षणेषु मध्येमध्ये परभक्त्याद्यवस्थान्तरितत्वेऽपि तादृशप्रवाहसन्तान नैरन्तर्यस्य न काऽपि क्षतिरिति ।। ९२ ।।

**(अव)** एवं तर्हि शरीरपातसमये हार्दसाक्षात्कारजननात् तस्य प्राथमिकस्य परभक्त्यादिमूलकत्वावश्यंभावात् परभक्त्यादेश्च तदानीमनवकाश इत्यत आह-

**(द्वया-)**

**शरीरपातसमये हार्दस्यानुग्रहस्स्वयम् ।**
**परिपाकं प्रपन्नानां प्रयच्छति तथाविधम् ।। ९३ ।।**

**अङ्कोलतैलसिक्तानां बीजानामचिराद् यथा ।**
**विपाकः फलपर्यन्तस्तथाऽत्रेति निदर्शितम् ।। ९४ ।। इति ।।**

अनयोरर्थः-शरीरपातसमये, हार्दस्य; परमात्मनः, अनुग्रहः स्वयं प्रपन्नानां तथाविधं तत्क्षणादेव - परभक्ति - परज्ञान - परमभक्ति - भगवत्साक्षात्कारतत्प्रीतितत्कैङ्कर्यपर्यन्तहेतुभूतं, परिपाकं; अवस्थाविशेषं, प्रयच्छति; ददाति ।। ९३ ।।

दृष्टान्तमाह -अङ्कोलेति ।। अङ्कोलतैलसिक्तानां; अङ्कोलो वृक्षविशेषः, तत्तैलसिक्तानां, बीजानां फलपर्यन्तो विपाकः, चिरकालसाद्ध्यः, अचिरात्; स्वल्पकालेनैव भवति, लोके हि शैलूषादिप्रदर्शितबीजादेव पञ्चषघटिकामात्रेण अङ्कुरपल्लवकोरकफलदर्शनात्, तथाऽत्र हार्दानुग्रहात् त्रिचतुरक्षण एव तस्य परभक्तिपरज्ञानपरमभक्तिभगवत्साक्षात्कारादिपरम्परापर्यन्तोऽपि विपाकः सिद्ध्यतीति दर्शितम् ।। ९४ ।। निदर्शनान्तरमाह-

**(द्वया-)**

**"दुष्टेन्द्रियवशाच्चित्तं नृणां यत्किल्बिषैर्वृतम् ।**
**तदन्तकाले संशुद्धिं याति नारायणालये" ।। ९५ ।।**

**इति व्रतविशेषेषु सात्वतादिषु शिष्यते ।**
**तद्वदत्रोपपद्येत गद्योक्तान्त्यदशागमः ।। ९६ ।। इति ।।**

अनयोरर्थः- व्रतविशेषेषु; मोक्षार्थव्रतविशेषेषु सात्वतादिषु पञ्चरात्रादिषु, तदङ्गतया विहितनारायणालयनित्यवासादन्तकाले क्षणादेव परभक्त्यादिमूलकैङ्कर्यपर्यन्तपरिपाकसिद्धिस्तद्वत् इह गद्योक्त्यान्त्यदशागमः इति ।। ९६ ।।

**(अव)** ननु? नाथमुनिपराङ्कुशादीनां संसार एव तादृशपरिपाको दृश्यते, तत् कथमित्यत आह-

**(द्वया-)**

**अनुग्रहविशेषेण केनचित् परमात्मनः ।**
**कुरुकाधीशनाथाद्याः प्रागप्यन्वभवन् प्रभुम् ।। ९७ ।। इति ।।**

स्पष्टोऽर्थः ।। ९७ ।।

**(अव)** प्रथमं द्वयस्थश्रीशब्दस्य शृणोति,श्रावयतीत्यादिषड्विधव्युत्पत्त्या सूपगमनपुरुषकारत्वोपयुक्तगुणप्रकाशकत्वमुपपाद्य देव्यास्तस्याः पुरुषकारत्वे प्रमाणाकाङ्क्षायामाह-

**(द्वया-)**

**अर्थस्वभावानुष्ठानलोकदृष्टिगुरूक्तिभिः ।**
**श्रुत्या स्मृत्या च संसिद्धं घटकार्थावलम्बनम् ।। ९८ ।। इति ।।**

अस्यार्थः- स्वयमेव व्याचष्टे, तमेव लिखामः । अर्थस्वभावो नाम; ईश्वरवत् पितृत्वप्रयुक्तप्रतापोष्मलत्वादिकं विना केवलं मातृत्वप्रयुक्तवात्सल्याद्यतिशयेन 'न कश्चिन्नापराध्यति, कःकुप्येद्वानरोत्तम, मर्षयामीह दुर्बला' इत्यादिप्रमाण-सिद्धशीतलस्वभावता । वाल्लभ्यातिशयेन स्वपुरस्कारेण प्रवृत्ताननन्तापराधानपि जनान् स्ववाक्यमनतिलङ्घ्य भगवान् यथा रक्षति तथा भगवन्निग्रहनिवर्तन-सामर्थ्यञ्च । अनुष्ठानं तु प्रह्लादविषय द्रोहाधिक्येन अतिक्रोधाद्धिरण्यं भित्त्वाऽप्यप्रशान्तकोपतया उग्रनृसिंहमुपसर्पितुमक्षमाणां ब्रह्मादीनां श्रियं शरणं गतानामनन्तरं तत्पुरस्कारेण शान्तलक्ष्मीनृसिंहमुपसन्नानां स्तोत्रं कृत्वा कार्यसिद्धिरासीदिति पुराणप्रसिद्धम् । 'सीतामुवाचातियशाः राघवञ्च महाव्रतम्' इत्यादिरामायणप्रसिद्धम्, श्रीरामानुजानुष्ठानञ्च । लोकदृष्टिश्च; राजादयो ह्यन्तःपुरपरिजनेष्वपराधिषु यत्किञ्चित्प्रसादनादपि क्षमां कुर्वन्तीति । गुरूक्तयः; श्रीपराङ्कुशादीना 'அகலகில்லேன்' इत्यादिसूक्तयः । श्रुतिः; 'श्रियं लोके देवजुष्टामुदारां, तां पद्मनेमीं शरणमहं प्रपद्ये ।' इत्यादिश्रीसूक्तादिरूपा । स्मृतिः; "वाचःपरं प्रार्थयिता प्रपद्येन्नियतः श्रियं" इति शौनकादिवचनरूपा । एवं बहुप्रमाणसिद्धम् घटकार्थाव- लम्बनमिति।। ९८ ।।

**(अव)** श्रीशब्दार्थमुक्त्वा मतुपा वैशिष्ट्यमुच्यते, अत उपायत्वावस्थायां उपेयत्वावस्थायाञ्च श्रिया वैशिष्ट्यं श्रीविशिष्टस्यैवोपायत्वमुपेयत्वञ्चेत्याह-

(द्वया-)

**स्वाम्युपाय उपेयश्च स्वरूपादिसमर्पणे ।**
**प्रथितः प्रतिसम्बन्धी श्रीमान् निगमचक्षुषाम् ।। ९९ ।। इति ।।**

अस्यार्थः- स्वामी निगमचक्षुषां; निगम एव चक्षुः येषां तेषां विदुषां, स्वरूपादिसमर्पणे; स्वरूपरक्षाभरफलसमर्पणे, प्रतिसम्बन्धी; उद्देश्यभूतः, उपायः उपेयश्च श्रीमानेव प्रथितः उपायत्वावस्थायामुपेयत्वावस्थायाञ्च श्रीमान् = श्रीविशिष्ट एव प्रथितः । मतुप उभयत्र श्रवणेऽपि केचिदुपायत्वावस्थायां वैशिष्ट्यं नेत्याहुः; तेषामुपेयत्वावस्थायामपि तन्न स्यात् । प्रणवस्थोकारस्य लक्ष्मीवाचकतया अकारोकारवाच्ययोरात्महविरुद्देश्यत्वप्रतिपादककठवल्ल्यादिविरोधश्च स्यात् । अत एवोक्तं निगमचक्षुषामिति ।।

अथ नारायणशब्देन न्यासानुष्ठानसमये फलाविनाभावविस्रम्भजनकेष्वभ्यर्हिततमद्वादशगुणयोगः प्रतिपाद्यत इत्युक्त्वा, वात्सल्यादीनां निर्वचनानि तेषामुपयोगविशेषाश्च दर्शिताः । अत्रास्मत्संग्रहकारिकाः ।

वात्सल्य-स्वामित्वे सौशील्यं सुलभताऽखिलज्ञत्वं ।
स च सर्वशक्तिभावस्त्वमृषा सङ्कल्पता च कारुण्यम् ।।

सकृतज्ञत्वस्थिरता परिपूर्णत्वञ्च परममौदार्यम् ।
तेषां निर्वचनानि पृथगुपयोगाश्च दर्शिता गुरुणा ।।

आद्यं दोषादर्शनमागो गणयेन्न नस्स इतिधीदम् ।
स्वामित्वं शेषित्वं स्वान् रक्षेन्न त्यजेदिति ज्ञप्त्यै ।।

श्लेषो जडैस्तृतीयं मन्देष्वस्मासु युङ्क्त इति धीकृत् ।
तुर्यं सुखगम्यत्वं दूरे स इति स्पृहा विघातकरम् ।।

सर्वज्ञता प्रसिद्धा स्वजनेष्टानिष्टवत् स इति धीकृत् ।
अघटितघटनं षष्ठं सूरिषु मां कर्तुमलमिति ज्ञप्त्यै ।।

सप्तममिच्छाप्रतिहतिराहित्यं नः करोति विस्रम्भम् ।
अष्टममागोघनविनतार्तिहृदिच्छा क्षमिष्यतीति धिये ।।

नवमं कृताल्पतुष्टिः स्वल्पैरर्च्यस्सतामिति ज्ञप्त्यै ।
दशमं स्थिरव्रतत्वं विश्वासस्थैर्यमेव नः कुरुते ।।

पूर्णा य आप्तकामो विनोपकारं फलप्रद इति धिये ।
अन्त्यं सर्वस्वदता ह्यनुबन्धिकुलेऽपि फलद इति बुद्ध्यै ।। ९९ ।।

**(अव)** अथ चरणावित्यनेन विग्रहवत्त्वमुपलक्ष्यते। सच विग्रहः दिव्यात्मस्वरूपादप्यभ्यर्हितःशुभाश्रयत्वात्; दिव्यात्मस्वरूपस्य शुभत्वेऽपि आश्रयत्वाभावादित्युक्त्वा विग्रहस्य प्राशस्त्यै युक्त्यन्तरमप्याह-

**(द्वया –)**

**परावरसुखग्राह्यं प्रेमबोधप्रसावकम् ।**
**स्वरूपात् स्वामिनो रूपमुपादेयतमं विदुः ।। १०० ।। इति ।।**

अस्यार्थः-परैः, सनकादिभिः अवरैः= अस्मदादिभिः । प्रेमबोधप्रसावकम्; प्रेमजनकं ज्ञानजनकं च, शिष्टं स्पष्टम् ।। १०० ।।

**(अव)** विग्रहस्य सर्वस्य शुभाश्रयत्वेऽपि अवयवान्तरेषु सत्स्वपि चरणयोरेव शरणत्वे को हेतुरित्यत्राह-

**(द्वया –)**

**चित्तालम्बनसौकर्यकृपोत्तम्भनतादिभिः ।**
**उपायत्वमिह स्वामिपादयोरनुसंहितम् ।। १०१ ।। इति ।।**

अस्यार्थः- कृत्स्नविग्रहापेक्षया चरणयोरल्पतया चित्तालम्बने; चित्तस्यावगाहने, सौकर्यात्; सुकरभावात्, अवयवान्तरापेक्षया कृपोत्तम्भकत्वात्, चरणग्रहणे हि लोके दया सञ्जायते यथातथा पाणिमूर्द्धादिग्रहणे न भवति, आदिशब्दात् 'तवामृतस्यन्दिनि' इत्याद्युक्तक्रमेण भोग्यतातिशयः, गङ्गाप्रवाहस्थानतया वा पावनतमत्वं अहल्यापरीक्षिदाद्युज्जीवकत्वञ्च गृह्यते । स्वामिपादयोरुपायत्वमनुसंहितमिति संबन्धः ।। १०१ ।।

**(अव)** अत्र केचिदाक्षिपन्ति,श्रीमन्नारायणेति वैशिष्ट्यवाचिमतुपा देव्या

उपायकोटौ प्रवेश इति भवदुक्तं न युक्तं, उभयोरुपायत्वे चरणानिति निर्देशस्स्यात्, नतु चरणाविति, इति- तदनूद्य परिहरति-

(द्वया-)

**चरणाविति निर्देशः पत्नीवैशिष्ट्यबाधकः ।**
**इति मन्दैरिदं प्रोक्तं श्रीमच्छब्दविरोधतः ।। १०२ ।।** इति ।।

अस्यार्थः-श्रीमच्छब्दस्य श्रीवैशिष्ट्यबोधकतया तद्विरोधिनः चरणाविति निर्देशस्यैवान्यथा नेयत्वादिति भावः ।। १०२ ।।

**(अव)** विपरीतं किं न स्यादित्यत आह -

(द्वया-)

**शब्दस्वरसतः प्राप्तं वैशिष्ट्यं प्रथमं श्रुतम् ।**
**विशेष्यचरणद्वित्वं नहि बाधितुमर्हति ।। १०३ ।।** इति ।।

अस्यार्थः-लोके दण्डी पुरुषस्तिष्ठति कुण्डलीत्यादौ बाधकाभावे शब्दस्वारस्येन वैशिष्ट्यमेकक्रियान्वयित्वरूपं प्रतीयते,अतोऽत्रापि शब्दस्वरसतः प्रथममेव प्रतिपन्नं श्रीवैशिष्ट्यं, अनन्तरं श्रुतं विशेष्यचरणद्वित्वं, कर्तृ, बाधितुं नार्हति हि। अयं भावः- उपक्रमाधिकरणन्यायेनासञ्जातविरोधित्वेन प्रथमश्रुतं श्रीवैशिष्ट्यं प्रबलं अनन्तरश्रुतस्य चरणद्वित्वश्रवणस्य विशेष्यचरणद्वित्वपरतां नेतुमलं, तस्य स्वोत्पत्तिदशायां सञ्जातविरोधितया दुर्बलत्वेनान्यपरतया नेतुमुचितत्वात् अन्यथोपक्रमाधिकरणविरोधः स्यात् ।। १०३ ।।

**(अव)** वस्तुतस्तु परोक्तं बाधकत्वाभिमतं बाधकमेव नेत्याह-

(द्वया-)

**चरणानिति वक्तव्यमिति यच्च प्रसञ्जितम् ।**
**ग्रन्थज्ञैरपहास्यं तत्पतिप्राधान्यतोऽन्वयात् ।। १०४ ।।** इति ।।

अस्यार्थः-चरणानिति निर्देशस्स्यात् विशिष्टविवक्षायां इति यत् प्रसञ्जितं; आपादितं- तत् ग्रन्थज्ञैरपहास्यं पतिप्राधान्यतोऽन्वयात्, शरण्यत्वेन पत्युः

प्राधान्येनान्वयः पत्न्यास्तु विशेषणत्वेनान्वयः समप्राधान्येन उभयोर्विवक्षायामेव हि श्रीनारायणचरणानिति वक्तव्यं, विशेषणतया अन्यतरस्याप्राधान्यविवक्षायां तु प्रधानभूतविशेष्यचरणद्वित्वम् आदायैव तथा निर्देशात्,अन्यथा लक्ष्मणविशिष्टो रामभद्र आगतः इत्यत्रैकवचनं न स्यादिति भावः ।। १०४ ।।

**(अव)** ननु 'मामेकं शरणं व्रज' इति भगवतैवोक्ततया भगवान् अद्वितीय एव शरण्यो वाच्यः, श्रियश्शरण्यत्वे न सद्वितीयोक्तिः साहसमात्रम् इत्यत आह- **(द्वया –)**

**न सम्राजि सपत्नीके सद्वितीयोक्तिसाहसम् ।**
**तथाऽत्रेत्यपरामृश्य दर्शितं गुरुसाहसम् ।। १०५ ।।** इति ।।

अस्यार्थः- सम्राट्त्वादद्वितीयो राज्यधुरं वहतीत्युक्ते पत्न्या सद्वितीयत्वात् अद्वितीयत्वहानिरिति को ब्रूयात्, अद्वितीयत्वं स्वसमान- सम्राडन्तरव्यावर्तकं, न पत्न्यादेरिति प्रकृतेऽपि तुल्यं, मामेकमिति सहधर्मचारिण्यास्स्वापृथक्सिद्धाया देव्या न व्यावर्तकं, अन्यथा गुणादीनामपि व्यावृत्तिस्स्यादिति निर्गुणस्य निर्विशेषस्यैव शरण्यता स्यात् । तस्मात् यथा सपत्नीके सम्राजि सद्वितीयोक्तिसाहसं नास्ति, तथाऽत्रेति वस्तुस्थितिमपरामृश्य गुरुसाहसम्= अलक्ष्मीकस्यैव शरण्यत्वमिति महत् साहसं दर्शितम् इति ।। १०५ ।।

**(अव –)** अथ शरणशब्दस्य उपायत्वमर्थः 'उपाये गृहरक्षित्रोश्शब्दः शरणमित्ययम् । वर्तते, साम्प्रतं त्वेष उपायार्थैकवाचकः' इत्युक्तत्वात्, उपायतया प्रपद्ये =अद्ध्यवस्यामीत्यर्थः । यद्यपि तत्तच्छास्त्रार्थैराराधितः ईश्वर एव सर्वफलोपायः, एवं सिद्धे किमर्थमत्रोपायत्ववरणं, तथाऽपि मोक्षोपायभक्त्यादौ अशक्तत्वात् तत्तदुपायस्थाने स्वयमेव स्थित्वा तत्साद्ध्यं फलं सहजकारुण्यातिशयेन त्वमेव मे देहि, मम शिरसि मोक्षोपायभक्त्यादिभरं च न निधेहि, मद्रक्षाभरः तवैव, तदंशे मम यत्नान्तरं नास्ति, इत्युपायान्तरस्थाने भगवतो निवेशनमेवात्मरक्षाभरसमर्पणमिति निष्कृष्टमर्थमाह-

**(द्वया –)**

**भरन्यासबलादेव स्वयत्नविनिवृत्तये ।**

**अत्रोपायान्तरस्थाने रक्षको विनिवेशितः ।। १०६ ।। इति ।।**

अस्यार्थः- "अभीष्टे दुस्साधे स्वत इतरतो वा क्वचन तत् भरन्यासं याच्ञान्वितमभिवदन्ति प्रपदनम् । इतः पश्चादस्मद्यतननिरपेक्षेण भवता समर्थ्यो ऽसावर्थस्त्विति मतिविशेषं तदविदुः" इति भरन्यासे कृते स्वव्यापारनिवृत्तिस्स्यात् । अतः उपायान्तरस्थाने स्थित्वा तदर्थं साधय इत्युपायान्तरस्थाने रक्षको विनिवेशितः इति भावः ।। १०६ ।।

**(अव)** उत्तरखण्डश्रीमच्छब्दनारायणशब्दयोरर्थमुक्त्वा, तद्गतचतुर्थ्याः कैङ्कर्यार्थकत्वमुक्त्वा, भवेयमिति पदमद्ध्याहृत्य तत्प्रार्थनापरत्वमप्युक्त्वा नमस्तावत् पदद्वयात्मकः कैङ्कर्यविरोधिनिषेधपरः कैङ्कर्यविरोधीनि च स्वाधीनकर्तृत्व-स्वाधीनभोक्तृत्वस्वार्थकर्तृत्वस्वार्थ भोक्तृत्वादीनि नमः= मम कैङ्कर्यविरोधि न स्यात् । इत्यनिष्टनिवृत्तिप्रार्थनापरो नमश्शब्द इत्यभिहितं; कथं तर्हि प्रपन्नेन भोगा भोक्तव्या इत्यत्राह-

**(द्वया –)**

**अप्राप्तितः परिहरन् स्वपरैः स्वरक्षां**

**तादर्थ्यधीपरिहृतस्वपरार्थभावः ।**

**अन्योपभोगविरहादनघः प्रपन्नो**

**भुङ्क्ते स्वभोगमखिलं पतिभोगशेषम् ।। १०७ ।। इति ।।**

अस्यार्थः- स्वपरैः= स्वेन परैश्च स्वरक्षां = स्वस्य रक्षां अप्राप्तितः परिहरन्; स्वस्य स्वद्रव्यत्वाभावात् परद्रव्यत्वाभावाच्च स्वरक्षां प्रति स्वपरेषामप्राप्तत्वात् अप्रसक्तत्वात् तैः स्वरक्षां परिहरन्, तादर्थ्यधीपरिहृत- स्वपरार्थभावः - तादर्थ्यधिया = भगवच्छेषत्वधिया परिहृतस्वार्थभावः परार्थभावश्च, भगवति स्वरूपसमर्पणेन स्वपरशेषत्वबुद्धिं परिहरन् परमात्मनि स्वात्मरक्षाभरसमर्पणात् स्वस्य परेषाञ्च स्वरक्षकत्वबुद्धिश्च परिहरन् अन्योपभोगविरहात् अनघः-अन्यशब्दः

पतिशेषभोगादन्यपरः, पतिशेषभोगान्यस्वार्थभोगविरहादनघः प्रपन्नः अखिलं स्वभोगं पतिभोगशेषं= पतिभोगार्थं भुङ्क्ते ।। १०७ ।।

निगमयति-

**वैराग्यविजितस्वान्तैःप्रपत्तिविजितेश्वरैः ।**
**अनुक्रोशैकविजितैरित्युपादेशि देशिकैः ।। १०८ ।।** इति ।।

अस्यार्थः- वैराग्येण विजितं स्वान्तं= मानसं येषां ते, प्रपत्त्या विजितः वशीकृतः ईश्वरो यैः, अनुक्रोशैकविजितैः= दयामात्रविजितैः देशिकैः इत्युपादेशि ।। १०८ ।। इति ।।

**(द्वया-)**

**इदमष्टपदं व्यासे समासे षट्पदं विदुः ।**
**वाक्यं पञ्चपदैर्युक्तमित्याख्यातप्रधानकम् ।। १०९ ।। इति ।।**

(इदं व्यासे) व्यस्ते क्रियमाणे, अष्टभिः पदैर्युक्तं भवति(समासे) श्रीमन्नारायणचरणावित्येकपदत्वे समासे क्रियमाणे, षट्पदं विदुः । तथा (पञ्चपदैः)प्रपद्ये इति क्रियापदव्यतिरिक्तैः पञ्चभिःपदैर्युक्तं (आख्यात- प्रधानकं) आख्यातं = क्रियापदं प्रपद्ये इति, तदेव प्रधानं यत्र वाक्ये तादृशमेकं वाक्यं भवति, ''क्रिया वा कारकान्विता'' इति लक्षणात् ।

## अथ चरमश्लोकाधिकारः ।।

**(अव)** सर्वधर्मान् परित्यज्य - स्थितस्त्वमित्यनुवादपक्षो युक्तः 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इत्यत्र इमं लोकं अनित्यं प्राप्य वर्तमान इत्यध्याहारवत् स्थितस्त्वमित्यध्याहारमभ्युपेत्य योज्यम् । यद्यपि विधिपक्षे क्त्वाप्रत्ययस्वारस्यमधिकं अद्ध्याहारभावश्च, तथाऽपि विशिष्टविधिगौरवं; अस्मिन्ननुवादपक्षे सर्वधर्मान् = मोक्षसाधनतया विहितसर्वधर्मान् उपासनादीन्, विद्याभेदमादाय बहुत्वम्, परिकरबहुत्वमादाय वा । अत्र त्यागो नाम नैराश्यं, आशया प्रसक्तेषु धर्मेषु आशात्याग एव त्यागशब्दार्थः । परीत्युपसर्गेण सर्वकालेषु सर्वप्रकारेण त्यागे अतिशयो विवक्षितः । तस्मादाकिञ्चन्याधिकारविवक्षायां

अनुवादपक्षः । 'परित्यज्य, शरणं व्रज' इति विधिपक्षेऽपि सर्वधर्मत्यागपुरस्कारेण 'शरणं व्रज'इति कार्पण्यमङ्गतया विधीयते, नतु केवलम् स्वरूपेण कर्मत्यागस्याङ्गत्वं वक्तुमुचितम् । यद्वा परित्यागस्यापि विधिपक्षे धर्मादिनैरपेक्ष्ये विधेस्तात्पर्यं परीत्युपसर्गेण 'आचान्तेन कर्तव्यम्, शुचिना कर्तव्यं, यज्ञोपवीतिना कर्तव्यम्' इत्यादिना सर्वकर्मसाधारण्येन विहितशुद्ध्याचमनाद्यनपेक्षत्वं विवक्षितम् । मोक्षसाधनतया विहितकर्मयोगादिधर्मत्यागविधिपरतया परित्यज्येत्यस्य व्याख्यानं केचित् कुर्वन्ति । तत्र विकल्पः- किं कर्मयोगादौ शक्तान् प्रति परित्यागविधिः प्रवर्तते । उत अशक्तान् प्रति। नान्त्यः; अशक्त्या अप्राप्तानां त्यागस्याविधेयत्वात् । नाद्यः; शक्तानामेव प्रपत्त्यधिकारत्वापत्तेः । तच्चाशक्ताधिकारत्वप्रतिपादक-बहुप्रमाणसंप्रदायविरुद्धं; एकस्मिन्नेवाधिकारिणि कर्मयोगादिकं विधाय पुनस्तत्परि-त्यागेन प्रपत्तिरूपलघूपायविधाने गुरुलघुविकल्पः स्यात् । नह्ययमुपपद्यते । एकस्मै फलाय गुरूपायं विधाय तत्परित्यागपूर्वकलघूपायविधाने गुरूपाये कस्याप्यप्रवृत्त्याऽननुष्ठानलक्षणाप्रामाण्यं गुरूपायविधीनां स्यात् । लघूपायप्ररोचनार्थ-मनुपायानपि कर्मयोगादीनुपायान् उक्त्वा ततः तेषां त्यागः प्रपत्त्यर्थं क्रियत इत्यनुपपन्नम् । अनुपायेषूपायत्वविधायकानां भ्रान्तवाक्यत्वापत्तिः । ज्ञानविश्वा-साधिक्यवन्तः प्रपत्तावधिकारिणः ज्ञानविश्वासमान्द्यवन्तः भक्तावधिकारिण इत्यपि मन्दं; प्रपत्त्युपदेष्टॄणां व्यासादीनामज्ञत्वाद्यापत्तेः । ननु व्यासादयः प्रपन्ना एव लोकसंग्रहणाय उपासका इति चेत् ''स्वाधिकारार्हस्य कर्मणः लोकसंग्रहणार्थ-मनुष्ठानं नत्वतथाभूतस्य'' इति गीताभाष्य एवोक्तेः, तस्मात् कर्मयोगादिसर्वधर्मत्याग-विधिपक्षो न संभवति । नापि वर्णाश्रमधर्मत्यागोऽङ्गं विधीयत इति युक्तम्,प्रपत्त्युत्तरकाले 'अहिंसा सत्यमक्रोध'इत्यादिसामान्यधर्मानाचार्य -वन्दनादिविशेषधर्मांश्च त्यक्त्वा पशुमृगादिवत् तूष्णीमवस्थानापत्तेः। निवृत्तिधर्माणां न त्यागः, प्रवृत्तिधर्माणामेव त्याग इत्यपि न- निवृत्तिधर्माणामपि स्वरक्षणार्थ-स्वव्यापारत्वेन परित्याज्यत्वावश्यंभावात् । प्रवृत्तित्याग एव सर्वधर्मत्यागशब्दार्थ इत्यपि न; प्रपन्नाचारविरोधात्, सर्वेऽपि हि स्वस्वाचारे प्रवर्तमाना दृश्यन्ते ।

प्रपत्त्यनुष्ठानक्षणे सर्वधर्मत्यागोऽङ्गं नान्यदेति, ब्रूम इति चेत् ,प्रपत्तिकाले शिखायज्ञोपवीतोद्ध्र्वपुण्ड्रधारणादित्यागापत्तेः । तस्मात् सर्वधर्मपरित्यागो हि नाम- भक्त्याद्यपेक्षितसर्वधर्मानपेक्षतया नैरपेक्ष्यमात्रमिति न प्रमाणान्तरविरोधः। एवं विशिष्टविधानपक्षे आकिञ्चन्याधिकारःकेन बोध्यत इति चेत्- 'मा शुचः' इत्यनेन द्योदितः; शोकस्यैतदाकिञ्चन्यजन्यत्वेन तस्यैव अधिकारसमर्पकत्वं; अनुवादपक्षे सर्वधर्मपरित्यागवाक्यादेव सिद्ध इत्याह-

**(चरम–)**

**अधिकारं पुरस्कृत्योपायस्य निरपेक्षताम् ।**

**एकशब्देन वक्तीति केचिद् वाक्यविदो विदुः ।। ११० ।।** इति ।।

अस्यार्थः-अनुवादपक्षे प्रथमपादेनाधिकारं पुरस्कृत्य एकशब्देन उपायस्य नैरपेक्ष्यं वक्ति इति । भगवानिति शेषः। चरमश्लोक इति वा, इति केचिद्वाक्यविदो विदुः ।। ११० ।।

**(अव)** विशिष्टविधिपक्षे अधिकारबोधकत्वं क्वांश इत्यत आह-

**(चरम–)**

**नैरपेक्ष्यं पुरस्कृत्य विहितस्य लघीयसः ।**

**उपायस्याधिकारं तु शोकद्योत्यं विदुः परे ।। १११ ।।** इति ।।

अस्यार्थः-प्रथमपादेन नैरपेक्ष्यं पुरस्कृत्य द्वितीयपादेन विहितस्य लघीयसः उपायस्याधिकारं शोकद्योत्यं ''मा शुचः'' इति निषेद्धव्यशोकद्योत्यं अपरे आचार्या विदुः ।। १११ ।।

**(अव)** तथा च प्रकृते किमायातमित्यत आह-

**(चरम–)**

**इत्थमर्थाविशेषेऽपि योजनाभेदमात्रतः ।**

**प्राचां विवादस्संवृत्तः भाष्यकारैरवारितः ।। ११२ ।।** इति ।।

अस्यार्थः-इत्थं; उक्तप्रकारेण अर्थाविशेषेऽपि प्रथमपादस्याकिञ्चन्य-

परत्वेऽन्यनिरपेक्षत्वपरत्वे वा अकिञ्चनस्य अन्यानपेक्षं प्रपदनं विधेयम् इति पक्षद्वयेऽप्यविरोधाद् वाक्यार्थभेदाभावेऽपि योजनाभेदमात्रतः प्राचां श्रीविष्णु-चित्तादीनां, विवादस्संवृत्तः, भाष्यकारैरवारितः, अप्रतिषिद्धः, श्रीविष्णुचित्तवर-दाचार्यादयो हि स्वग्रन्थेष्वेवमूचुः- 'स्वस्ववर्णाश्रमाधीनं कर्म न त्याज्यमेव तत् । यावद्देहं प्रपन्नैश्च त्यागहेतोरदर्शनात् ।। विहितेषु व्यवस्थानं प्रपन्नानां प्रपञ्च्यते । श्रुतिस्मृत्यादिविहितमनुष्ठानं तु नित्यकम् ।।' इति। अतः तेषां कर्मत्यागविधौ विवाद एव नास्तीति निश्चितम्। एतेन भाष्यकारसन्निधावेव त्यागस्यानुवाद इति कैश्चिदुक्तम्, विधिरिति कैश्चिदुक्तम्, तेषामुभयेषां विवादं अप्रतिषेधता भगवता भाष्यकृता "अप्रतिषिद्धमनुमतम्" इति न्यायात् त्यागविधिरप्यङ्गीकृत इति निरस्तम् । प्रथमपादस्याकिञ्चन्याधिकारप्रतिपादकत्वं उताङ्गान्तरनिरपेक्षत्व-विधिपरत्वमित्येव विवादस्संवृत्तः, नतु स्वरूपत्यागविधिरस्ति नेति । तस्मात् पूर्ववृत्तान्तं अज्ञात्वा अर्वाचीनानां कोलाहल इति भावः ।। ११२ ।। तदेवाह-
(चरम-)

**अज्ञातपूर्ववृत्तान्तैर्यत्तत्रारोपितं परैः ।**
**तत्तु श्रीविष्णुचित्ताद्यैर्निर्मूलमिति दर्शितम् ।। ११३ ।। इति ।।**

अस्यार्थः-अज्ञातपूर्ववृत्तान्तैःपरैः तत्र=चरमश्लोके, यत्= स्वरूपत्यागवि-धिपरत्वं, आरोपितम्, तत्तु श्रीविष्णुचित्ताद्यैराचार्यैर्निर्मूलं= निष्प्रमाणं, इति दर्शितम्। स्वग्रन्थेषु तैरेव स्वरूपत्यागस्य दूरतो निरस्तत्वात् इति ।। ११३ ।।

**(अव)** एवं प्रपत्त्युपायोऽकिञ्चनस्याङ्गान्तरानपेक्षतया लघीयस्तया विहितश्चेत् व्यासादयः किमिति प्रपत्तावनवतीर्णा इति शङ्कायां, केचित् ज्ञानविश्वास-मान्द्यात् ते तत्र न प्रवृत्ता इत्यूचुः, तन्न युक्तम्, प्रपत्तिशास्त्रप्रणेतृणा-मज्ञत्वाद्यनुपपत्तेः, किन्तु प्रपत्तावधिकाराभावात् तेषां तत्र न प्रवृत्तिरिति युक्तम्। तत्र च प्रपत्तौ भक्त्याद्युपायस्वरूपाज्ञानेऽपि सामान्याकारेण प्रपत्तिस्व-रूपज्ञानं एकोऽधिकारः, भक्तिप्रपत्तिविषयकविशदज्ञानेऽपि भक्त्यादावशक्तिरूपः द्वितीयोऽधिकारः, ज्ञानशक्तिसद्भावेऽपि विलम्बासहत्वञ्च तृतीयोऽधिकारः,

व्यासादीनामधिकारपुरुषाणां ज्ञानशक्तिमतां विलम्बेन मुक्तिमिच्छतां उक्ताधिकारविमुक्ततया प्रपत्त्यनर्हत्वमेव सिद्धम्, नतु ज्ञानविश्वासमान्द्यमित्युक्तम्, अथ 'नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते' इति विश्वासमान्द्यस्य भक्त्यधिकारत्वावगमात् व्यासादीनां शक्तिमत्त्वेऽपि विश्वासमान्द्यात् भक्तौ प्रवृत्तिः, लोके च महाविश्वासशून्यानां भक्तावप्यशक्तानां परम्परया भक्तियोगोत्पादकनामसङ्कीर्तनादौ प्रवृत्तिदर्शनाच्च महाविश्वासमान्द्यमपि भक्तावधिकार इति युक्तमित्याशङ्क्य आह

**(चरम–)**

**अशक्तस्यातिकृच्छ्रेषु दुराशादार्ढ्यशालिनः ।**
**कस्यचिद् बुद्धिदौर्बल्यं लघुत्यागस्य कारणम् ।। ११४ ।।** इति ।।

अस्यार्थः-अतिकृच्छ्रेषु=अतिदुष्करेषु, भक्त्यादिषु, दुराशादार्ढ्यशालिनः कस्यचित्, भक्त्यादिनैव मुक्तिं साधयामि, नान्यदुपायान्तरमस्तीति दुराशा, तस्याः दार्ढ्यं आप्तवचनैरप्यप्रकम्प्यत्वं, तेनशालिनःतादृशस्वभावशालिनः, कस्यचित्; नरस्य बुद्धिदौर्बल्यं विश्वासमान्द्यं लघुत्यागस्य कारणं; व्यासादेस्तु शक्तत्वाद्विश्वासवत्त्वाच्च न तथेति भावः ।। ११४ ।।

**(अव)** तर्हि ''नरस्य बुद्धिदौर्बल्यात्'' इति वचनस्य कोऽर्थः उच्यते, भरन्यासं त्यक्तवतां त्यागहेतुबुद्धिदौर्बल्यमिति यथाश्रुत एवार्थः। नरस्य बुद्धिदौर्बल्येति महाविश्वासरूपाङ्गलोपात् प्रपत्त्यनर्हस्य भक्त्यादौ इच्छा भवति, तत्राप्यशक्त्या परंपरया तत्साधनादिप्रवृत्तिः, नतु प्रपत्तिविषयक विश्वासमान्द्यमपि भक्त्यादावधिकार इति तात्पर्यम्, एवञ्च विश्वासातिशयवत्तया परेषामपि संशयच्छेदिषु व्यासादिषु नायं न्यायो वक्तव्य इत्याह-

**(चरम–)**

**तत्र प्रपत्त्यनर्हाणामन्यदित्यपि युज्यते ।**
**व्यासादिषु तु नैवेषा नीतिस्संशयघातिषु ।। ११५ ।।** इति ।।

अस्यार्थः-तत्र= उपायान्तराशक्तेषु विश्वासमान्द्यात् प्रपत्तावप्यनर्हाणां-अयोग्यानां अन्यत्= परंपरया भक्त्यादिकारणं नामकीर्तनादिकमित्यपि युज्यते,

तत्तावदभ्युपगच्छामः । व्यासादिषु तु संशयघातिषु= परेषां संशयच्छेदिषु स्वयं महाविश्वासवत्सु नैषा नीतिर्युक्ता, विश्वासमान्द्यप्रयुक्ता प्रपत्तावप्रवृत्तिः इति नीतिः न युक्तेत्यर्थः ।। ११५ ।।

**(अव)** ननु धर्मस्वरूपत्यागपक्षो यद्यपि न संभवति, तथाऽपि 'सङ्गं त्यक्त्वा फलञ्च 'इति सात्त्विकत्यागस्यैव त्यागशब्दार्थतया उपायत्वबुद्धित्याग एवात्र विधीयते । न स्वरूपत्याग इति चेत्- कथमुपायत्वबुद्धित्यागः? किमनुपायतया सिद्धेषूपायत्वबुद्धित्यागः, उत उपायतया प्राप्तेषु। नाद्यः, सिद्धत्वात्। न द्वितीयः । अशक्यानुष्ठानानां केषाञ्चिद् धर्माणामुपायत्वबुद्धित्यागस्यापि पूर्ववत् स्वतस्सिद्धत्वेनाविधेयत्वात् शक्यानुष्ठानतया प्राप्तानां मुक्त्युपायानां उपायत्व-बुद्धित्याग एव उचितः, स एव त्यागशब्दार्थश्च । स्वरूपेणानुष्ठीयमानतादशायामेव हि फलसङ्गकर्तृत्वामात्रत्यागः सात्त्विकत्यागःस्वरूपेणापि त्यागे फलादित्यागस्य कैमुतिकसिद्धत्वेन अविधेयत्वात्, कर्मयोगादिषु शक्तस्यैव शक्त्या अनुष्ठानं, मुक्त्युपायतया प्राप्तेषु कर्मयोगादिषु उपायत्वबुद्धित्यागमात्रावश्यंभावेन स्वरूपेण तदनुष्ठानमावश्यकमिति भक्त्युपायनिष्ठ एवासौ प्रपन्न इति पर्यवसितं, इयांस्तु भेदः- पूर्वोक्तभक्तस्य प्रपत्तिः भक्त्यङ्गतयाऽनुष्ठेया, अस्य तु प्रपत्त्यङ्गतया भक्तिरनुष्ठेयेत्यभिहितम् । एवञ्च स्वरूपत्यागपक्षे कैङ्कर्यतया अनुष्ठेयानामपि धर्माणां त्याज्यत्वसंकीर्तनान्निषिद्धत्वं स्यात्, अतोऽपचारकोटावेव कैङ्कर्यं निविशते । निषिद्धसुरामांसादिनैवेद्यनिवेदनवदविशेषात् । बुद्धित्यागपक्षे तु कर्मयोगादीनां स्वरूपेण प्रपत्त्यङ्गता स्यात् इति निरपेक्षत्वं आकिञ्चन्याधिकारता सर्वाधिकारता च प्रपत्तेर्न स्यात्, तस्मादुभयथाऽपि व्याहतमित्याह-

**(चरम-)**

**अतः स्वरूपत्यागोक्तौ कैङ्कर्यस्यापचारता ।**
**उपायत्वमतित्यागे तत्स्वरूपाङ्गता भवेत् ।। ११६ ।।** इति ।।

स्पष्टोऽर्थः ।। ११६ ।।

**(अव)** उपायत्वबुद्धित्यागे दोषान्तरमाह-

**(चरम–)**

**सात्त्विकत्यागयुक्तानां धर्माणामेतदङ्गता ।**

**नूनं विस्मृतकाकादिवृत्तान्तैरुपवर्णिता ।। ११७ ।।** इति ।।

अस्यार्थः- सात्त्विकत्यागयुक्तानां धर्माणां, उपायत्वबुद्धिं विहाय स्वरूपेणानुष्ठीयमानानां कर्मज्ञानभक्तियोगादीनां एतदङ्गता=प्रपत्त्यङ्गता, विस्मृतकाकादिवृत्तान्तैः; कपोतकाळियादिरादिशब्दार्थः अज्ञतया भगवच्छेषितया वा अनाघ्रातभक्तियोगानां काकादीनां वृत्तान्ता विस्मृता यैः तैः परैः उपवर्णिता, नूनमित्युत्प्रेक्ष्यते । यद्यपि स्वरूपत्यागपक्षे काकादिशरणागतौ नेदं दूषणं लगति, तथाऽपि स्वरूपत्यागपक्षस्य प्रातिस्विकदूषणानि प्रागेवोक्तानीति मन्तव्यम् ।। ११७ ।।

**(अव)** ननु? काककपोतकाळियादीनामज्ञत्वेन तत्र यथाकथञ्चिदस्तु, ज्ञानिनां पराङ्कुशादीनां प्रपदनेषु भक्तियोगाङ्गकत्वं दृष्टमित्यत आह-

**(चरम–)**

**सकृत्प्रपदनेनैव धर्मान्तरदवीयसा ।**

**तत्क्षणेऽभिमतं पूर्वे सम्प्रापुरिति शुश्रुम ।। ११८ ।।** इति ।।

अस्यार्थः- पूर्वे; आचार्याः श्रीपराङ्कुशादयः, धर्मान्तरदवीयसा; धर्मान्तराणां= कर्मयोगादीनां दवीयसा= दूरतरेण, सकृत्प्रपदनेनैव; भक्तिवदसकृदावृत्त्यनङ्गकेन प्रपदनेनैव, तत्क्षणे= आर्तप्रपत्त्युत्तरक्षणे, अभिमतं; परमपुरुषार्थं, संप्रापुः= प्राप्तवन्तः इति शुश्रुम, शु श्रवणे इत्यस्माद्धातोः लिटि उत्तमपुरुषबहुवचनम्। यद्वा-पूर्वे विभीषणादयः, अत एव तत्प्रकरणस्थं 'सकृदेव प्रपन्नाये'ति वचनं प्रत्यभिज्ञातं, तत्क्षणे; प्रपत्त्युत्तरक्षणे, अभिमतं; रामप्रसादनरूपं, नतु राज्यप्राप्तिरूपं अपसिद्धान्तात्, राममनोरथपरिपूर्णार्थतया अभिमतराज्याभिषेकं वा ।। ११८ ।।

**(अव)** ननु इतराङ्गनैरपेक्ष्यविधिं वदतां भवतामपि मते चोद्यमिदं तुल्यं, अप्राप्तानामङ्गानां नैरपेक्ष्यं तावन्न विधेयं प्रयोजनविरहात्, प्राप्तानाम् अङ्गानां तु

अपरित्याज्यत्वात् कथंतन्नैरपेक्ष्यं स्यात्, तत्कथमुभयथाऽपि नैरपेक्ष्यं इत्यत आह-

**(चरम-)**

**प्रसक्ताङ्गत्वबाधे तु ब्रह्मास्त्रसमतेजसः ।**
**उपायस्य प्रभावश्च कैङ्कर्यादि च सुस्थिरम् ।। ११९ ।। इति ।।**

अस्यार्थः-यमनियमप्राणायामप्रत्याहारादीनामप्राप्तानामङ्गत्वबाधात् न ब्रूमः वयम् । किन्तु 'अग्निहोत्रादि तु तत्कार्यायैव तु तद्दर्शनात्, विहितत्वाच्चाश्रमकर्मापि, सहकारित्वेन च' इत्यादिना विद्याङ्गत्वेन विहितवर्णाश्रमधर्माणां, 'आचार्यस्तु ते गतिं वक्ता' इति विद्याविशेषश्रुतगतिचिन्तनादीनां च दहरशाण्डिल्यविद्यादिवत् न्यासविद्यायामपि विद्यात्वाविशेषात् प्राप्तानामङ्गत्वमात्रं बाध्यते, नतु स्वरूपमपि तेषां बाद्ध्यं, अतः प्रसक्तानां तेषामङ्गत्वबाधे तु ब्रह्मास्त्रसमतेजसः-ब्रह्मास्त्रं हीतरानपेक्षं, तद्धि शणशल्कादिबन्धकरणे स्वयं शिथिलम् अभूदिति प्रसिद्धम्। उपायस्य= न्यासाख्यस्य असहायशूरस्यैव प्रभावश्च रक्षितः कैङ्कर्यादि च सुस्थिरं;अङ्गत्वं विनैव नित्यनैमित्तिकादिकैङ्कर्यादिकञ्च स्वरूपेणानुष्ठेयतया सुस्थिरं भवति। गतिचिन्तनादिकञ्च विद्याङ्गत्वं विना स्वयंप्रयोजनतया कर्तव्यमेव । आदिशब्देनाकिञ्चनाधिकारत्वं सर्वाधिकारत्वञ्च प्रपत्तेस्सङ्गृह्यते । अन्यथा बुद्धित्यागपक्षे ब्रह्मास्त्रवदसहायतया कार्यकारित्वं यावज्जीवं कैङ्कर्यानुवृत्तिः केवलं कर्मयोगादिस्वरूपानुवृत्त्या अकिञ्चनाधिकारत्वं सर्ववर्णानुष्ठेयत्वञ्च न स्यादिति भावः ।। ११९ ।।

**(अव)** ननु प्रपदनाङ्गमेव नित्यनैमित्तिकं वक्तव्यं, अन्यथा आनु-कूल्यसङ्कल्परूपाङ्गलोपापातात्, भगवदाज्ञापालनमेव हि आनुकूल्यं; तस्मादानुकूल्य-सङ्कल्पमहिम्नैव तेषामङ्गत्वसिद्धिरित्यत आह-

**(चरम-)**

**सङ्कल्पमात्रमेवाङ्गं श्रुतम् आचरणं पुनः ।**
**अनङ्गम् आज्ञया प्राप्तं न सङ्कल्पनिबन्धनम् ।। १२० ।। इति ।।**

अस्यार्थः-प्रपदनस्य 'आनुकूल्यस्य सङ्कल्पःप्रातिकूल्यस्य वर्जनम्' इत्यादिवचनैर्हि सङ्कल्पमात्रमेवाङ्गं श्रुतम्, मात्रशब्दार्थमेवानुवदति एवकारः। आचरणं पुनः अनङ्गं; तर्हि तत् किमर्थमित्यत आह- आज्ञया प्राप्तमिति, श्रुतिस्मृत्यादिरूपया भगवदाज्ञया प्राप्तमवर्जनीयमित्यर्थः । न सङ्कल्पनिबन्धनं-यथा उपनयने 'कर्म कुरु, मा सुषुप्थाः, भिक्षाचर्यं चर' इति गुरूपदेशानन्तरभावि 'बाढ' मित्यादिसङ्कल्पनिबन्धनत्वमुत्तरकालकर्मानुष्ठानस्य नास्ति, किन्तु शास्त्रविहितत्वनिबन्धनत्वं, तथा इहापीति भावः । तस्मात् प्रपत्त्यनङ्गमपि कर्म अवश्यं कर्तव्यमिति सिद्धम् ।। १२० ।।

**(अव)** ननु यावतामनुष्ठानं कथं न स्यात्, अनङ्गस्याप्यनुष्ठाने जलताडनादिकमपि अनुष्ठीयेतेत्याशङ्क्य, तत्रोत्तरं प्रागुक्तमेव स्मारयति-

**(चरम-)**

**आहारग्रहमन्त्रार्थजात्यादिनियमैर्युतः ।**
**कुर्याल्लक्ष्मीशकैङ्कर्यं शक्त्याऽनन्यप्रयोजनः ।। १२१ ।।** इति ।।

अस्यार्थः-शक्त्या इत्यनेन यावदनुष्ठानशङ्का निरस्ता । अनन्यप्रयोजन इत्यनेन प्रयोजनान्तराभावेऽपि लक्ष्मीशकैङ्कर्यरूपतया भगवत्प्रीतिमात्रफलकत्वेनानुष्ठान-सम्भवख्यापनात् जलताडनादिवत् अफलत्वाद् अननुष्ठेयमिति शङ्कानिरासः। शिष्टं प्रागेव व्याख्यातम्।। १२१ ।।

**(अव)** एवं श्रुतिस्मृत्यादिविहिताचाराणामनुष्ठेयत्वं प्रमाणशरणानामावश्यकं-अन्यथा सम्प्रदायविरोध इत्युक्त्वा, लौकिकदृष्टान्तमपि तत्र दर्शयति द्वाभ्याम्-

**(चरम-)**

**मङ्गल्यसूत्रवस्त्रादीन् संरक्षति यथा वधूः ।**
**तथा प्रपन्नश्शास्त्रीयपतिकैङ्कर्यपद्धतिम् ।। १२२ ।।**
**यद्वन्मङ्गल्यसूत्रादेस्त्यागे संरक्षणेऽपि वा ।**
**रक्षेन्निरुन्ध्याद् भोगैर्वा पतिस्तद्वदिहापि नः ।। १२३ ।।** इति ।।

अनयोरर्थः- वधूः मङ्गल्यसूत्रवस्त्रादीन् पत्युराज्ञानुवर्तिनी तत्प्रीतये यथा

संरक्षति, तथा प्रपन्नश्शास्त्रीयपतिकैङ्कर्यपद्धतिं; पतिर्वोढा । शास्त्रीय इत्यनेन शास्त्रत एवासौ भगवतोऽभिप्रायं वेत्ति न प्रमाणान्तरादिति सूचितम् ।। १२२ ।।

त्यागे बाधकदृष्टान्तमाह- यद्वदिति। पतिः मङ्गल्यसूत्रादेः त्यागे भोगैः निरुन्ध्यात्; भोगहीनां कुर्यात् इत्यर्थः । संरक्षणेऽपि च रक्षेत् । वधूमिति शेषः ।। १२३ ।।

**(अव)** ननु; जात्यादिनियमैर्युतः, इति भवदुक्तं न सहामहे, ''वैदिकं ब्राह्मणानां तु राज्ञां वैदिकतान्त्रिकम् । तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकम् तु वा ।।'' इति हि विवेचनीयम्, भागवतेष्वयं ब्राह्मणः, अयं शूद्रः, इति विवेचने 'मद्भक्तं श्रोत्रियं वाऽपि निषादं श्वपचं तथा । वीक्षते जातिसामान्यात् स याति नरकं नरः' इति प्रत्यवायस्मरणात् व्यवस्थापनमेव न संभवतीत्यत्राह-

**(चरम-)**

**अवज्ञार्थमनर्थाय भक्तजन्मादिचिन्तनम् ।**
**शास्त्रव्यवस्थामात्रार्थं न तु तद् दुष्यति क्वचित् ।। १२४ ।। इति ।।**

अस्यार्थः-अवज्ञार्थं, भक्तजन्मादिचिन्तनमेव अनर्थाय, शास्त्रव्यवस्थामात्रं तु तत्क्वचिन्न दुष्यति ।। १२४ ।।

**(अव)** उक्तव्यवस्थासिद्ध्यर्थं तत्तज्जातिप्रदर्शनं तत्र तत्र दृष्टञ्चेत्याह-

**(चरम-)**

**अत एव हि शास्त्रेषु तत्तज्जात्यैव दर्शिताः ।**
**धर्मव्याध-तुलाधार-शबरी-विदुरादयः ।। १२५ ।। इति ।।**

अस्यार्थः-शास्त्रेषु= पुराणादिषु, धर्मव्याधादयः जातिख्यापनपूर्वकमेव दर्शिताः ।। १२५ ।।

**(अव)** तेषां प्रवृत्तिरपि स्वस्वजात्यनुगुणैव तत्र तत्र इतिहासे दर्शितेत्याह-

(चरम-)

**स्वजात्यनुगुणैवैषां वृत्तिरप्यैतिहासिकी ।**
**विशेषविधिसिद्धं तु तद्बलात् तत्र युज्यते ।। १२६ ।। इति ।।**

अस्यार्थः-ऐतहासिकी= इतिहासप्रोक्ता वृत्तिरपि, स्वजात्यनुगुणैव मांसविक्रयादिवचनात् ।। एवकारेण 'शूद्रयोनावहं जातः नातोऽन्यद् वक्तुमुत्सहे' इति प्रश्नेऽपि प्रणवाद्यनुच्चारणात् मर्यादादिलङ्घनं न कृतमिति द्योत्यते । ननु उपाख्याने 'विदुरस्य ब्रह्ममेधसंस्कारो धर्मराजेन कृतः इति श्रूयते, तत्कथमित्यत आह-विशेषविधीति । आकाशवाण्या तत्र ब्रह्ममेधो विहितः' इति विशेषविधिसिद्धं तत्तु तद्बलात्= विशेषविधिबलात् तत्रैव युज्यते, नान्यत्रेत्यर्थः ।। १२६ ।।

**(अव)** ननु; क्वचित्सिद्धमिति विधिलङ्घनमन्यत्रापि स्यात् इत्यत आह-
(चरम-)

**देशकालाधिकार्यादिविशेषेषु व्यवस्थिताः ।**
**न धर्माः प्राप्तिमर्हन्ति देशकालान्तरादिषु ।। १२७ ।। इति ।।**

अस्यार्थः-देशविशेषव्यवस्थिता धर्माः= मातुलसुतापरिणयादयः, कालव्यवस्थिताः= अल्पद्वादश्यादिषु 'आमध्याह्नाः क्रियास्सर्वाः' इत्यादि- क्रियमाणाः अपकर्षादयः, सूतकादिकाले पञ्चमहायज्ञादिलोपाश्च । अधिकारि- विशेषे आतुरादौ स्नानकल्पाः । यथा न शक्तेषु प्रसज्यन्ते, तद्वद्विदुरादिषु विशिष्य विहिता धर्माः नान्यत्र प्राप्नुवन्तीत्यर्थः । यद्वा- 'देवालयसमीपस्थान् देवसेवार्थमागतान् । चण्डालान् पतितान् वाऽपि स्पृष्ट्वा न स्नानमाचरेत्' इत्यादिवचनसिद्धस्य देवोत्सवकालादावगीत (वनुयत?) 'शूद्रादिस्पर्शस्यान्यदा यथा नाचरणं, भगवत्सन्निधौ शूद्रादिदृष्टभगवन्महानैवेद्यस्वीकारेऽपि अन्यदेशेऽपि यथा तद्दृष्टान्ना-दिपरित्यागः, 'तत्पादाम्ब्वतुलं तीर्थं तदुच्छिष्टं सुपावनम्' इत्यादिकं पुरुषान्तरे यथा नादर्तव्यम्, एवं विदुरादौ विशेषविधिसिद्धं अन्यत्र न प्राप्नोतीत्यर्थः ।। १२७ ।।

**(अव)** एवं मर्यादामजानन्तः केवलं भ्राम्यन्तीत्याह-

**(चरम-)**

**केचित् तत्तदुपाख्यानतात्पर्यग्रहणाक्षमाः ।**
**कलिकोलाहलक्रीडां वर्धयन्ति रमापतेः ।। १२८ ।। इति ।।**

अस्यार्थः-तत्तदुपाख्यानानां तात्पर्यं= भगवद्भक्तमाहात्म्यविशेषमात्रप्रख्यापनं, तद्ग्रहणाक्षमाः केचित् रमापतेः कलिकोलाहलक्रीडां वर्द्धयन्ति, मर्यादाभञ्जनेन लीलां सकलजनविषयां उत्पादयन्ति ।। १२८ ।।

**(अव)** ननु; 'स च पूज्यो यथा ह्यहं' इति पूजा म्लेच्छादिसाधारण्येन प्रतिपाद्यते, तत्कथमित्यत्राह-मातृभिरित्यादिश्लोकत्रयेण । तत्राद्यौ द्वौ श्लोकौ स्मृतिवचने दृष्टान्तार्थमुपात्ते ।

**(चरम-)**

**मातृभिःपितृभिश्चैताः पतिभिर्देवरैस्तथा ।**
**पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ।। १२९ ।।**

**जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।**
**तानि कृत्याहतानीव विनश्यन्ति समन्ततः ।। १३० ।।**

**एवमादिषु पूजोक्तिः यथौचित्यं नियम्यते ।**
**भक्तम्लेच्छादिपूजोक्तिरेवमेव नियम्यताम् ।। १३१ ।। इति ।।**

एषामर्थः-एताः= दुहितरः, मातृभिः पितृभिः पतिभिः देवरैश्च पूज्याः भूषयितव्याश्च, पूजनीयैरेव मातापितृभिः पूज्यत्वमुक्तम् ।। १२९ ।।

यथा जामयः= स्नुषाः, अप्रतिपूजिताः= असत्कृताः, यानि गेहानि शपन्तिः तानि गेहानि कृत्यया= रुद्रादिसंबन्धिन्या, हतानीव विनश्यन्ति ।। १३० ।।

एवमादिषु पूजोक्तिः= पूजावचनं, यथौचित्यं; मर्यादामनतिक्रम्यैव यथा नियम्यते, नतु वन्दनीयत्वादिकं तदर्थः, एवमेव भक्तम्लेच्छादिपूजोक्तिरपि बहुमन्तव्यत्वमात्रपरतया नियम्यतामित्यर्थः ।। १३१ ।।

**(अव)** अथ सर्वधर्मपरित्यागविधिपक्षे अङ्गनैरपेक्ष्यविधिपरत्वमित्युक्तम् । किं तदङ्गत्वेन परित्याज्यमित्याकाङ्क्षायां प्रपत्त्युत्तरकालं प्राप्तं यत्कैङ्कर्यं तदपि द्विविधं- सारकल्करूपेण, तत्र कल्कं त्याज्यं, सारभूतं स्वरूपेणानुष्ठेयं तु अङ्गत्वबुद्धित्यागेनानुष्ठेयमित्याह-

**(चरम-)**

**साक्षाल्लक्ष्मीपतावेव कृतं कैङ्कर्यमञ्जसा ।**
**सार-कल्कविभागेन द्विधा सद्भिरुदीर्यते ।। १३२ ।।** इति ।।

स्पष्टोऽर्थः ।। १३२ ।।

**(अव)** सारस्वरूपमाह-

**(चरम-)**

**कृतकृत्यस्य कैङ्कर्यं यदनन्यप्रयोजनम् ।**
**गुर्वादिरक्षणार्थं वा तत् सारं सम्प्रचक्षते ।। १३३ ।।** इति।।

अस्यार्थः-कृतकृत्यस्य; अनुष्ठितोपायस्य, अनन्यप्रयोजनं= भगवत्-प्रीतिमन्तरेण प्रयोजनान्तरमुद्दिश्य अकृतमित्यर्थः, गुर्वादिरक्षणार्थं वा यत्क्रियते तदपि सारम् ।। १३३ ।।

**(अव)** कल्कं निर्वक्ति-

**(चरम-)**

**डम्भार्थं परपीडार्थं तन्निरोधार्थमेव वा ।**
**प्रयोजनान्तरार्थं वा कैङ्कर्यं कल्क इष्यते ।। १३४ ।।** इति ।।

अस्यार्थः- डम्भार्थं; ख्यातिलाभाद्यर्थं। परपीडार्थं =परस्य व्याध्यादि-पीडासिद्ध्यर्थं, तन्निरोधार्थं = परेण क्रियमाणकैङ्कर्यनिरोधार्थमित्येव भासते (?) पीडार्थमित्यनेन सिद्धत्वात् परस्य कारागृहादौ बन्धनार्थमेव वा । प्रयोजनान्तरार्थं वा भगवत्प्रार्थनापूर्वकं अभिचारवत् पूजादिकं आरभ्यते, पशुपुत्रादिप्रयोजनान्तरार्थं वा श्रीवेङ्कटेशस्य द्रव्यसमर्पणादिकं क्रियते, तत्सर्वं कल्कं= भगवदुद्देशेन

प्रयोजनान्तरलिप्सया कृतं कर्म कल्कमित्यर्थः, 'तान्येव भावोपहतानि कल्कः' इत्युक्तत्वात् तत्सर्वं प्रपन्नस्य त्याज्यमिति भावः ।। १३४ ।।

**(अव)** ननु ? अङ्गपरित्यागेऽपि स्वरूपेणानुष्ठेयं सारमेव न कल्कमित्युक्तं, ततश्च किं फलमित्यत्राह-

**(चरम-)**

**अतश्शक्यानि सर्वाणि न प्रपत्त्यर्थमाचरेत् ।**
**अशक्येषु च सामर्थ्यं न तदर्थं समार्जयेत् ।। १३५ ।। इति ।।**

अस्यार्थः- अतः परित्यज्येत्यस्य नैरपेक्ष्यविधिपरत्वोक्तेः शक्यानि सर्वाणि आचर्यमाणान्यपि न प्रपत्त्यर्थमाचरेत्, अशक्येषु च सामर्थ्यं= योग्यतां, तदर्थं = प्रपत्त्यर्थं नार्जयेत् । अङ्गत्वे हि असतां यूपादीनां आर्जनाय यतितव्यं नात्र तथा, यथाशक्ति कैङ्कर्यत्वेन अनुष्ठेयत्वादिति भावः ।। १३५ ।।

**(अव)** एवमेव सर्वधर्मत्यागविधिपक्षे नित्यकर्मादिविधायकप्रमाणानां सात्त्विकत्यागमात्रविधायकप्रमाणानामविरोधो यथा न सिद्ध्यति तथा निर्वाहानाह- आत्माशक्येति त्रयेण-

**(चरम-)**

**आत्माशक्यवृथायासनिवारणमिहापि वा ।**
**लज्जापुरस्सरत्यागवादोऽप्यत्र नियम्यताम् ।। १३६ ।।**

**सुदुष्करेषु धर्मेषु कुशकाशावलम्बतः ।**
**आशालेशानुवृत्तिर्वा त्यागोक्त्या विनिवार्यते ।। १३७ ।।**

**अविशिष्टफलत्वेन विकल्पो यश्च सूत्रितः ।**
**तन्मुखेनापि वाऽत्रेष्टं ब्रह्मास्त्रन्यायसूचनम् ।। १३८ ।। इति ।।**

एषामर्थः-आत्माशक्येषु वृथायासः= भक्त्यादिविषये व्यर्थोद्योगः तस्य निवारणं; अशक्यसर्वधर्मसाधनार्थवृथायासं परित्यज्येत्यर्थः । परैः स्वरूपत्यागपक्षे परीत्युपसर्गस्य लज्जानुतापादित्यागार्थकत्वस्योक्तत्वादशक्यविषये वृथाऽऽयासत्या-

गमात्रपक्षे इहापि भवदभिमतलज्जाप्रभृतित्यागोऽपि उपसर्गार्थतया प्रवेश्यतां, को दोष इत्याह- इहापि वेति । अशक्यारंभं कृत्वा सर्वं वृथा जातमिति । लज्ञापुरस्सरशब्देन पुनःपुनः लज्ञानुतापादिः विवक्षितः। स सर्वोऽपि परीत्युपसर्गार्थ इति भावः ।। लज्ञादिभिस्सह अशक्यविषयवृथाऽऽयासं परित्यज्येत्यर्थः । अत्र परीत्युपसर्गे लज्ञादित्यागवादोऽपि नियम्यताम्, प्रवेश्यताम्, तस्मात् आत्माशक्येत्यारभ्य नियम्यताम् इत्यन्तमेकः कल्पः ।। १३६ ।।

उपरि कल्पान्तरमाह- सुदुष्करेष्विति । सुदुष्करेषु धर्मेषु । विषयसप्तमी। कुशकाशावलम्बतः- प्रवाहेणाकृष्टस्य कुशकाशावलम्बनं यथा न कार्यक्षमं तादृशोपायाभासतः, योगाभ्यासप्राणायामादिशिक्षया शनैश्शनैरहं साधयेयमिति सिषाधयिषया उपायाभासपरिग्रहात् आशालेशानुवृत्तिर्वा त्यागोक्त्या विनिवार्यते, सुदुष्करधर्मविषयक कुशकाशावलम्बनकल्पोपाया भासपरिग्रहजनिताशालेशं परित्यज्येत्त्यर्थः ।। १३७ ।।

तृतीयं कल्पमाह- अविशिष्टेति । विद्यासु; दहरशाण्डिल्यादिषु अविशिष्टफलत्वेन; मोक्षरूपफलाविशेषेण विकल्पो यस्सूत्रितः । 'विकल्पो ऽविशिष्टफलत्वात्' इति तन्मुखेन; सूत्रितविकल्पप्रदर्शितमुखेन, ब्रह्मास्त्रन्यायसूचनं वा अत्र= त्यागविधाविष्टम्, अयं भावः-विद्याविकल्पविधानात् विद्यासु यथा परस्परनैरपेक्ष्यं तथा विद्यात्वाविशेषात् प्रपत्तावपि विद्यान्तराङ्गभूतगतिचिन्तनाद्यन-पेक्षावश्यंभावात् प्रस्तुतप्रपत्तौ इतराङ्गमेळनापेक्षायां विश्वासशैथिल्येन प्रपत्तिप्रच्यवनापत्त्या ब्रह्मास्त्रन्यायदृढीकरणाय विद्यान्तराङ्गानि गतिचिन्तनादीनि परित्यज्येत्यर्थ इति त्यागविधिर्योज्य इति ।। १३८ ।।

**(अव)** आहत्य पूर्वोक्तप्रकारान् सङ्गृह्य श्लोकद्वयेनाह-

**(चरम-)**

**अतोऽशक्ताधिकारत्वम् आकिञ्चन्यपुरस्क्रिया ।**
**अनङ्गभावो धर्माणाम् अशक्यारम्भवारणम् ।। १३९ ।।**

**तत्प्रत्याशाप्रशमनं ब्रह्मास्त्रन्यायसूचनम् ।**
**सर्वधर्मपरित्यागशब्दार्थास्साधुसम्मताः ।। १४० ।। इति ।।**

अनयोरर्थः-अतः=उक्तप्रकारात् अशक्ताधिकारत्वमनुवादपक्षे फलितमित्यर्थः । विधिपक्षे पञ्चधा निर्वाहमाह-आकिञ्चन्यपुरस्क्रिया; आकिञ्चन्यप्रतिसन्धानरूपकार्पण्यं पुरस्कृत्य शरणं व्रजेत्यर्थः-कार्पण्याङ्गतया विधिरित्यर्थः । धर्माणामनङ्गभावो विद्यान्तराम्नातानां विद्यात्वसाम्याद् आगतानां अङ्गत्वानपेक्षताविधिरित्यर्थः। अशक्यारम्भवारणम् ।। १३९ ।। तत्प्रत्याशाप्रशमनं ब्रह्मास्त्रन्यायसूचनम् । आहत्य सर्वधर्मशब्दार्थाः षड्विधास्साधुसम्मताः; न तु स्वरूपत्यागो वा उपायेषूपायत्वमतित्यागो वा, इत्युक्तम् ।। १४० ।।

**(अव)** पक्षान्तरमप्याह-

**(चरम-)**

**देवतान्तरधर्मादित्यागोक्तिरविरोधिनी ।**
**उपासनेऽपि तुल्यत्वादिह सा न विशेषिका ।। १४१ ।। इति ।।**

अस्यार्थः- देवतान्तरस्य= ब्रह्मशिवादेः उपासनादिधर्माणां त्यागोक्तिरविरोधिनी; प्रमाणान्तराविरोधिनी यद्यपि, तथापीह सा; उक्तिः अविशेषिका, उपासनेऽपि तुल्यत्वात् । अतः नात्यन्तं आदरणीयोऽयं पक्षः इति भावः ।। १४१ ।।

**(अव)** अथ द्वितीयपादव्याख्यानमुपक्रम्य मामित्यनेन सौलभ्यं, तृतीयचरणस्थाहंशब्देन परत्वञ्च द्योत्यते, श्रीगीतायामेवावताररहस्यज्ञानं पुरुषोत्तमविद्या च अपुनर्भवहेतुरिति प्रतिपादनात् अवतारे सौलभ्यप्रकटनात्; पुरुषोत्तमत्वे च "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इत्यादिना परत्वप्रकटनात् - तदुभयमप्यत्र पदद्वये द्योत्यमित्यभिधास्यन् अवताररहस्यज्ञानं सद्वारकप्रपत्तिनिष्ठस्य उपायपूर्तिकरं, अद्वारकप्रपत्तिनिष्ठस्य शरण्यगतवेद्यगुणेषु प्रधानतमं वेद्यं सौलभ्यमभिव्यनक्तीति

वक्तुं अवताररहस्यस्वरूपं प्रसङ्गात् सङ्गृह्याह-अवतारस्य सत्यत्वमिति द्वाभ्याम्। केचिदैन्द्रजालिकदर्शितविचित्रवस्तुप्रपञ्चवत् अवतारशरीरस्य मिथ्यात्वमेव, चर्ममयचक्षुर्ग्राह्यसुखदुःखानुभवहेतुबाल्ययौवनादिपरिणामवच्छरीरपरिग्रहस्य सर्वस्य परमेश्वरे दुर्वचत्वादित्याहुः; तन्निराकरणायाह-

**(चरम-)**

**अवतारस्य सत्यत्वमजहत्स्वस्वभावता ।**
**शुद्धसत्त्वमयत्वश्च स्वेच्छामात्रनिदानता ।। १४२ ।।**
**धर्मग्लानौ समुदयस्साधुसंरक्षणार्थता ।**
**इति जन्मरहस्यं यो वेत्ति नास्य पुनर्भवः ।। १४३ ।।** इति ।।

अवतारस्य सत्यत्वमिति ।। अयं भावः-अवतारस्य अपरमार्थत्वे तद्ज्ञानस्य मुक्तिहेतुत्वासंभवः, अपारमार्थिकविषयज्ञानं हि संसारहेतुः, तत्त्वज्ञानं निःश्रेयसहेतुरिति हि सर्वसम्प्रतिपन्नं; 'जन्म कर्म च मे दिव्यं एवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति, मामेति सोऽर्जुन' इति तात्त्विकत्वस्य कण्ठोक्तत्वाच्च । अजहत्स्वस्वभावता; अजहत् स्वस्य स्वभावः= सर्वज्ञत्व-सर्वेश्वरत्वाकर्मवश्यत्वापहतपाप्मत्वसत्यकामत्वसत्यसङ्कल्पत्वादिस्वभावो यस्य 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया' इति ह्युक्तम् । स्वां प्रकृतिं; स्वस्वभावं, आत्ममायया; माया= विचित्रशक्तिः । शुद्धसत्त्वमयत्वश्च= अप्राकृतदिव्यमङ्गलविग्रहत्वं 'जन्म कर्म च मे दिव्य' मित्युक्तेः । स्वेच्छामात्रनिदानता; 'सम्भवाम्यात्ममायया' इति 'तदात्मानं सृजाम्यहम्' इति च वचनात् ।। १४२ ।।

धर्मग्लानौ समुदयः='यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्' इत्युक्तेः । साधुसंरक्षणार्थता; 'परित्राणाय साधूनाम्' इति कथनात्, इति= एवंप्रकारेण, जन्मरहस्यं यो वेत्ति अस्य न पुनर्भवः; न संसार इत्यर्थः ।। १४३ ।।

**(अव)** एवं 'माम् इत्यनेन पुरःस्थतया स्वात्मनः प्रदर्शनात् सौलभ्यमभिव्यक्तं, उत्तरत्र सर्वपापनिवर्तकत्वकथनात् स्वातन्त्र्यञ्च स्पष्टम्, इमे च सौलभ्यस्वातन्त्र्ये परस्परसापेक्षतया समाश्रयितॄणां रक्षणोपयुक्ते परस्परव्यतिरेके त्वप्रयोजके इत्याह-

**(चरम-)**

**स्वतन्त्रस्यापि नैव स्यादाश्रयो दुर्लभस्य तु ।**
**अस्वतन्त्रात् फलं न स्यात् सुलभादाश्रितादपि ।। १४४ ।। इति ।।**

अस्यार्थः-स्वतन्त्रस्यापि दुर्लभस्य सौलभ्याभावे आश्रयः= आश्रयणमेव न स्यात् । सुलभादाश्रितादपि अस्वतन्त्रात् फलं= ऐश्वर्यादिफलं न स्यात्; स्वतन्त्रस्य दौर्लभ्ये आश्रयणमेव न घटते, सुलभस्यास्वतन्त्रत्वे आश्रयणघटनेऽपि फलं नास्ति, तस्य तत्प्रदानासामर्थ्यादिति भावः ।। १४४ ।।

**(अव)** ननु? अस्वतन्त्रात् मा भूत्; फलं कैङ्कर्यं तु लभ्यत एवेत्यत्राह-

**(चरम-)**

**अस्वतन्त्रे न कैङ्कर्यं सिद्ध्येत् स्वैरप्रसङ्गतः ।**
**दुर्लभे साध्यमप्येतन्न हृद्यं लोकनीतितः ।। १४५ ।। इति ।।**

अस्यार्थः-अस्वतन्त्रविषये कैङ्कर्यमपि न सिद्ध्येत्, स्वैरप्रसङ्गतः स्वेच्छयाऽपि स्थितौ विरोधाभावात्, नहि परतन्त्रमशक्तं प्रत्यपि किङ्करतया परतन्त्रतयाऽवस्थातव्यं, तस्य निग्रहानुग्रहाक्षमत्वेन स्वैरमेवावस्थानसंभवात् इत्यर्थः । अन्यथा जीवस्याप्रयोजकजीवान्तरं प्रति कैङ्कर्यप्रवृत्त्यापत्तेरिति भावः । स्वतन्त्रे यद्यपि कैङ्कर्यमुचितं, तथाऽपि दुर्लभे तस्मिन् साध्यमपि= साधयितुं योग्यमपि कैङ्कर्यं न हृद्यं, यथा-दवीयसि राज्ञि भृत्यानां परिचर्या न हृद्या, तथा प्रकृतेऽपीत्यर्थः ।। १४५ ।।

**(अव)** मामित्यस्य सौलभ्यं तात्पर्यार्थ इत्युक्त्वा एकपदस्य षडर्था आचार्यैरुपदिष्टा इत्याह द्वाभ्यां-

(चरम-)

**प्राप्यस्यैव प्रापकत्वं स्वप्राधान्यनिवारणम् ।**
**प्रपत्तेर्व्याजमात्रत्वम् अन्योपायैरनन्वयः ।। १४६ ।।**

**तदङ्गैरप्यसंबन्धः सर्वसाध्येष्वभिन्नता ।**
**इत्थमर्थाः षडाचार्यैरेकशब्दस्य दर्शिताः ।। १४७ ।। इति ।।**

अनयोरर्थः- मामित्यत्र एकवचनादेव स्वगतसङ्ख्याभिधानात् एकशब्दस्य अर्थान्तरेण भाव्यं, तत् किं । प्राप्यप्रापकयोरैक्यं-प्राप्यभूत- एवाहं प्रापकत्वेन उपायत्वेन स्वीकार्य इति भावः । स्वप्राधान्यनिवारणं 'एके मुख्यान्यकेवलाः' इति केवलं मां शरणं व्रज= मामेव शरणं व्रजेत्यर्थः । 'मामेव ये प्रपद्यन्ते' इतिवत् अवधारणार्थत्वं एकशब्दस्येति यावत् । तेनाहं स्वयमेव तवोपायोऽस्मि, शरणव्रज्याकर्तृत्वात् ममापि किञ्चिदुपायकोटिप्रवेश इति त्वया नाभिमन्तव्यम्, मद्दत्तकलेबरस्य मया दत्तधियः मदिच्छाधीनप्रवृत्तेः मां विना तव सत्तैव नास्ति, तादृशस्य ते कथमुपायत्वं, रक्षापेक्षणकर्तृत्वमात्रेण रक्षणोपायत्वे चातकस्य स्वरक्षणोपायत्वापत्तिः, स्तन्यार्थिनः स्तनन्धयस्यापि रोदनादिद्वारा स्वरक्षकापत्तिश्च। तस्मादहं एक एवोपायः न त्वमिति कर्तृत्वव्यावृत्त्यर्थं एकशब्द इति भावः। अनेनैव न्यायेन प्रपत्तेरप्यनुपायत्वमेकशब्दस्य व्यावर्त्यमाह-प्रपत्तेर्व्याजमात्रत्वम् । निर्व्याजरक्षकत्वे सर्वमुक्तिप्रसङ्गात्, किञ्चिद्व्याजसापेक्षं मामेवोपायतया स्वीकृतवतोऽकिञ्चनस्य व्यापारोऽपि अहमिव कथमुपायस्स्यादतोऽहमेक एव सिद्धोपाय इति प्रपत्तेर्व्याजमात्रत्वसिद्ध्यर्थं एकशब्द इति भावः । दृष्टश्च लोके- इदमौषधं एकमेव तव सर्वरोगहरं, इदं स्वीकुर्वित्युक्ते सर्वरोगनिवर्तकत्वमे-कस्यैवौषधस्य सिद्ध्यति, नतु स्वीकारोऽप्युपायः इति न तदेकत्ववचनविरोध इति भावः । अन्योपायैरनन्वयः= उपासनादिभिरनन्वयः= असंसर्गः, उपायान्तरान-पेक्षत्वम् इति यावत् । यथा - अङ्गप्रपत्त्यनुष्ठानानन्तरमुपासनादिकमङ्गीभूतमपेक्ष्य मोक्षप्रद एव भगवान् अकिञ्चनविलम्बाक्षमविषये प्रपत्तिमेवाङ्गीकृत्य भक्त्यादिकमनपेक्ष्यैव रक्षति, प्रपत्तेरुपायान्तरनैरपेक्ष्यतया एकशब्दः 'मामेकं

शरणं व्रज' उपायान्तरमनपेक्ष्याहमेव तदुपायान्तरं मय्येवारोप्य स्वयमेक एव त्वां रक्षिष्यामीत्यतो मामेकमेव शरणमुपायं स्वीकुर्विति भावः । अतः उपायान्तरनैरपेक्ष्यं प्रपत्तेःभगवच्छब्दविशेषणेनापि एकशब्देन द्योत्यते तदङ्गैरप्यसंबद्धः, विद्यान्तराङ्गत्वेनाम्नातानां नित्य नैमित्तिकादीनाम् अपि विद्यात्वसाम्यात् प्रपत्तावपि प्राप्तानामङ्गत्वमनपेक्ष्यैव शरणं व्रज इति तदङ्गानां नैरपेक्ष्यसिद्ध्यर्थमेकशब्द इति भावः । अहमेक एवाङ्गान्तरपुष्कलोपायान्तरकृत्यमपि करिष्यामीति स्वविशेषणं एकशब्दं प्रयुञ्जानस्य भगवतः तात्पर्यम् । अयञ्चार्थः परित्यजेत्यस्याङ्गान्तरनैरपेक्ष्यविधायकत्वपक्षे तद्दृढीकरणाय तदनुवादकैङ्कर्यशब्दः, परित्यज्येत्यस्यानुवादतयाऽधिकारपरत्वे तु एकशब्दस्यैवार्थ इत्युक्तम् । सर्वसाध्येष्वभिन्नता, सर्वफलेष्वभिन्नता, सर्वोपायत्वमिति यावत् । 'यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत् साङ्ख्येन न योगेन न भक्तितः । प्राप्यते परमं धाम यतो नावर्तते यतिः । तेन तेनाप्यते तत्तन्न्यासेनैव महामुने' इति तत्तत्फलकामनया प्रपन्नानामकिञ्चनानामहमेक एव तत्तदुपायसाध्यं फलं साधयामीति फलान्तरेष्वभिन्नता उपायत्वमिति फलितम्। एते षडर्थाः आचार्यैर्दर्शिताः ।। १४७ ।।

**(अव)** परपक्षं निराकरोति- केचित् त्वित्यादिनवभिः श्लोकैः-

**(चरम–)**

**केचित् त्विहैकशब्दार्थं शरण्यैक्यं प्रचक्षते ।**
**विशिनष्टि तदाऽपि श्रीर्गुणविग्रहवत् प्रभुम् ।। १४८ ।।** इति ।।

अस्यार्थः-केचित्तु इह= चरमश्लोके शरण्यस्य ऐक्यं= एकशब्दार्थं प्रचक्षते, एक एव भगवान् शरण्यः, नतु श्रीरपि सिद्धोपाय इति तेषामाशयः । तद्दूषयति-विशिनष्टीति ।। तदाऽपि= एकशब्दस्य शरण्यैक्यपरत्वेऽपि श्रीः प्रभुं= भगवन्तं गुणविग्रहवत् विशिनष्टि; सिद्धोपायस्य तस्य विशेषणतयाऽवतिष्ठते । एवञ्च गुणादिवदुपायतावच्छेदकतया वेद्याकारत्वेन वा सिद्ध्योपायानुप्रविष्टा देवीत्यर्थः । नचावच्छेदकविशेषणत्वे अपि नोपायसिद्धिरिति वाच्यम् । द्वयश्रुतचरणयोरप्यनुपायताप्रसङ्गादिति भावः ।। १४८ ।।

न केवलमुपायविशेषणतयोपायत्वं तस्याः भगवत इव, ईश्वरत्वादेव मुक्त्युपायत्वव्यवस्थापनाद्, यागादौ यजमानपत्न्योः कर्तृत्वं यथा तुल्यमिति तान्त्रिकाभ्युपगतम्, तथाऽत्रापि द्वयोराश्रितत्राणदीक्षायामाह-

**(चरम-)**

**ईश्वरी सर्वभूतानामियं भगवतः प्रिया ।**
**संश्रितत्राणदीक्षायां सहधर्मचरी स्मृता ।। १४९ ।।** इति ।।

अस्यार्थः- सर्वभूतानां ईश्वरी तथा श्रुतिप्रसिद्धेः, ईश्वरत्वे सिद्धे तस्यां मुक्त्युपायत्वं पत्युरिवेति भावः । भगवतःप्रियेत्यनेन वाल्लभ्यातिशयादस्यानन्तापराधैः सञ्जातकालुष्यमपि भगवन्तं प्रपन्नविषये प्रसन्नीकृत्य मोक्षप्रदानाभिमुखं करोति, अतोऽप्युपायत्वम् । तर्हि मामेकमिति कथमत्राह-'संश्रितत्राणदीक्षायां सहधर्मचरी स्मृता' । 'लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।। रक्षकस्सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ।' 'इयं सीता मम सुता सहधर्मचरी तव' इति हि स्मृता; अतो नैकत्वविरोधः। अत एव ''तदन्तर्भावात् त्वां न पृथगभिधत्ते श्रुतिरपि'', इति पूर्वाचार्यैः समर्थितमिति भावः ।। १४९ ।।

**(अव)** एकशब्दाविरोधेन वैशिष्ट्यमेव देव्यास्सिद्ध्यतीत्यत्र निदर्शनमाह-

**(चरम-)**

**एकं जगदुपादानमित्युक्तेऽपि प्रमाणतः ।**
**यथाऽपेक्षितवैशिष्ट्यं तथाऽत्रापि भविष्यति ।। १५० ।।** इति ।।

अस्यार्थः-'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं' इत्यत्र सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैवोपादानमित्यर्थवर्णनात् विशेषणस्योपादानब्रह्मगतैक्यविरोधित्वं नास्ति, तद्वदिहापि मोक्षोपायविशेषणत्वेनान्वयेऽपि देव्या नैकशब्दार्थविरोध इति भावः ।। १५० ।।

**(अव)** दृष्टान्तान्तरमाह-

**(चरम-)**

**एकोपास्तिविधानेऽपि गुणादीनां यथाऽन्वयः ।**

**तथैकशरणव्रज्याविधानेऽप्यनुमन्यताम ।। १५१ ।। इति ।।**

अस्यार्थः-'तमेवं विदित्वाऽति मृत्युमेति' इति तदेकोपासनस्य मुक्त्युपाय-त्वाभिधानं तत्तविद्याप्रकरणाम्नातगुणादिवैशिष्ट्येऽपि न विरुद्ध्यते, तद्वदिति भावः ।। १५१ ।।

**(अव)** तदेव विवृण्वन् प्रकृतेऽप्युपसंहरति-

**(चरम-)**

**यथा गुणादिवैशिष्ट्ये सिद्धोपायैक्यमक्षतम् ।**

**एवं पत्नीविशिष्टत्वेऽप्यभीष्टं शास्त्रचक्षुषाम् ।। १५२ ।। इति ।।**

एवं पत्नीविशिष्टत्वेऽपीत्यत्र इति करणमद्ध्याहार्यं, अभीष्टं शास्त्र-चक्षुषामित्यन्वयः ।। १५२ ।।

**(अव)** देव्या भगवदपृथक्सिद्धत्वादपृथक्सिद्धयोर्मध्येऽन्यतरकीर्तने अन्यतरस्य पृथक्कीर्तनफलमस्तीत्यत्र सदृष्टान्तमुदाहरति-

**(चरम-)**

**प्रभाप्रभावतोर्यद्वत् एकोक्तावितरान्वयः ।**

**एवमन्यतरोक्तौ स्यात् सहवृत्त्यभिधानतः ।। १५३ ।। इति ।।**

अस्यार्थः- प्रभाप्रभावतोरेकोक्तौ- दीप आगतः, सूर्य उदित इत्यादौ इतरान्वयः= प्रभान्वयो यद्वत्, एवं देवस्याभिधाने देव्याः, तस्याश्चाभिधाने देवस्यापि ग्रहणमिति। तत्र हेतुमाह- सहवृत्त्यभिधानत इति । 'अनन्या राघवेणाहं, अनन्या हि मया सीता, विष्णोः श्रीरनपायिनी, अहन्ता ब्रह्मणस्तस्य साऽहमस्मि सनातनी' इत्यभिधानात् ।। १५३ ।।

**(अव)** नन्वस्त्वपृथक्सिद्धत्वं देव्याः, तावता कथमुपायतान्वयः, चिदचित्प्रपञ्चस्यापि तथात्वप्रसङ्गादित्यत्र, न युक्तिबलमेवाऽत्रोद्भावितं, किन्तु प्रमाणमेवात्र द्रष्टव्यमित्याह-

(चरम–)

**स्मरन्ति चैनां मुनयः संसारार्णवतारिणीं ।**

**ऊचतुः स्वयमप्येतत् सात्वतादिषु तावुभौ ।। १५४ ।। इति।।**

अस्यार्थः-मुनयः; काश्यपादयः एनां संसारार्णवतारिणीं स्मरन्ति 'सर्वकामप्रदां रम्यां संसारार्णवतारिणीं, क्षिप्रप्रसादिनीं लक्ष्मीं शरण्यामनुचिन्तयेत् ।।' यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम् ।। निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः' इत्यादिकं, न केवलमेतावत्, सात्वतादिषु तावुभौ स्वयमेव ऊचतुः- 'लक्ष्मीं माञ्च सुरेशेशं द्वयेन शरणं गतः । मल्लोकमचिराल्लब्ध्वा मत्सायुज्यं स गच्छति ।।, मामेकां देवदेवस्य महिषीं शरणं व्रजेत्' इति परस्परं ऊचतुः ।। १५४ ।।

**(अव)** किञ्च करणमन्त्र एव कण्ठोक्तमुपायदशायामुपेयदशायाञ्च श्रीवैशिष्ट्यं, तस्मादुपेयदशायामेव वैशिष्ट्यवादिनां भवतामेकत्र पक्षपाते किन्नियामकमित्याशयादाह-

(चरम–)

**उपायोपेयदशयोर्द्वयेऽपि श्रीस्समन्विता ।**

**इष्टा च शेषिणि द्वन्द्वे शेषवृत्तिर्यथोचिता ।। १५५ ।। इति।।**

ननु? तस्या उपेयदशायामपि अनन्वय एवास्त्वित्यत आह- इष्टा चेति । 'उभयाधिष्ठानञ्चैकं शेषित्वं' 'अस्या मम च शेषं हि विभूतिः उभयात्मिका' इति व्यासज्यवृत्त्यैकशेषित्वाश्रयत्वात् उभयोश्शेषवृत्तिश्च उभयविषयिणी भवतामभीष्टा इति तद्रीत्या पूर्वखण्डे उपायकोटावनुप्रवेशपरत्वं युक्तमिति भावः ।। १५५ ।।

उपसंहरति-

(चरम–)

**अतोऽनन्यपरानेकश्रुतिस्मृत्यनुसारतः ।**

**पत्नीविशिष्ट एवैकः प्रपत्तव्य इहोदितः ।। १५६ ।। इति ।।**

अतः= उक्तयुक्तेः, अनन्यपरानेकश्रुतिस्मृत्यनुसारतः; प्राशस्त्यादान्यपर्यरहिताः अनेकाश्च श्रुतयः स्मृतयश्च, तदनुसारतः । देव्या मुक्तिहेतुत्वे श्रुतयः तावत् - 'श्रियं लोके देवजुष्टामुदारां तां पद्मनेमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे' । अत्र अलक्ष्मीशब्दस्संसारपरः । 'कामवत्सा अमृतं दुहाना, सा नो लोकममृतं दधातु, श्रियं वसाना अमृतत्वमायन्' इत्यादिकाः । भगवतो मुक्तिहेतुत्वस्य च श्रुतिसिद्धत्वात् उभयोः पृथङ्मुक्तिदत्वे ईश्वरद्वित्वापत्त्या उभयविधश्रुतीनामप्यैककण्ठ्याय ''उकारो लक्ष्मीवाचकः, । मकारस्तु तयोर्दासः'' इति प्रणवविवरणरहस्याम्नायोक्तक्रमेण विशिष्टपरत्वस्यावश्यवाच्यत्वात् । विशिष्टस्य मुक्तिंदत्वे एताःप्रमाणं । स्मृतयश्च-'आर्या यशोदा वरदा धर्मकामार्थमोक्षदा । अप्रमेयात्मिका सूक्ष्मा परनिर्वाणदायिनी, विमुक्तिफलदायिनी, भोगदा मुक्तिदायिनी, वाचः परं प्रार्थयिता प्रपद्येन्नियतः श्रियम्' इत्यादिकाः पूर्वोक्ताः । तदनुसारतः पत्नीविशिष्ट एवैकः श्रीमन्नारायण एव प्रपत्तव्य इहोदितः ।। १५६ ।।

**(अव)** एवमेकशब्दार्थमुक्त्वा शरणमुपायं व्रज= बुद्ध्यस्व स्वात्मरक्षाभरसमर्पणम् कुरु इति पर्यवसितार्थ इति व्याख्यातम्। अत्र केचित् 'व्रज ' इत्यनेन न किञ्चिद्विधीयते, भगवतः स्वस्य च शेषशेषिभावसम्बन्धज्ञानमात्रादेव भगवान् प्रसन्नो मुक्तिं प्रयच्छति । सिद्धोपायप्रतिपत्तिमात्रं वा मुक्त्युपायः । अनिवारणमात्रं वा, अचिद्व्यावृत्तिमात्रं वा, चैतन्यकृत्यं वा, चित्तसमाधानमात्रं वा, अधिकारिणःकृत्यम् । तदतिरिक्तं भरसमर्पणं नाम किञ्चिद्विधेयं नास्ति । यद्वा प्रपत्तिर्नोपायतया विधीयते, किन्तु अधिकारिविशेषणमात्रम् इत्यादयःपरपक्षाः-प्रतिक्षिप्ताः । तत्र च संबन्धज्ञानमात्रस्य च शास्त्रश्रवणमात्रेणापि स्वत एव जननात्, वाक्यार्थज्ञानस्य चाविधेयत्वादविधेयज्ञानवादस्य च भाष्य एव निराकरणात् । एतेन सिद्धोपायप्रतिपत्तिपक्षोऽपि निरस्तः । अनिवारणस्य सुषुप्त्यादावपि सत्त्वेन तदानीं मुक्तिप्रदानापत्तेः । अनुमतिमात्रस्य भक्त्यादावपि सत्त्वात् । अचिद्व्यावृत्ति-चैतन्यकृत्ययोः प्रतिकूलदशायामपि सत्त्वात् । एतेन अतिप्रसङ्गेन चित्तसमाधानपक्षोऽपि दूरतोऽपास्तः । नाप्यधिकारिविशेषणत्वं

प्रपत्तेर्युक्तं, 'व्रज' इति लोटा विधेयत्वप्रतीतेः फलतत्कामनादेरेव सिद्धस्याधिकारिविशेषणत्वात्-इत्याद्युक्तिभिः तान् पक्षान् दूषयित्वा जीवस्यात्यन्तपारतन्त्र्यादकर्तृत्वाच्च तं प्रति प्रपत्तिर्न विधेयेत्यत्रापि 'कर्ता शास्त्रार्थवत्त्वात्' इति सूत्रितरीत्या पराधीनकर्तृत्वस्य जीवे अभ्युपगमात्, अन्यथा भक्त्यादिशास्त्रस्य यागादीनाञ्च विधानानुपपत्तेः कैङ्कर्यादावपि अकर्तृत्वापत्तिरित्यादियुक्तिजालमुपन्यस्य; तत्र भक्त्यादिविधिवाक्यमपि न तद्विधिपरम्। किन्तु अन्योपायविश्वाससिद्ध्यर्थं उपच्छन्दनमात्रमिति यो वदति- तस्य पक्षं दूषयति-

**(चरम–)**

**अन्यविश्वाससिद्ध्यर्थं भक्त्युपायविधिं वदन् ।**
**सर्वशास्त्रेष्वविश्वासमाधत्ते मुखभेदतः ।। १५७ ।।** इति ।।

अन्यविश्वाससिद्ध्यर्थं भक्त्युपायविधिं वदन् वादी एकत्र विधिवाक्यस्य प्ररोचनामात्रत्वे सर्वत्राप्यविश्वासमाधत्ते मुखभेदतः= मुखान्तरेण, साक्षान्नाभिधत्ते, किन्तु पर्यायेणेति भावः । गुरुतयोपायदुष्करत्वं प्रदर्श्य त्वमत्र न शक्तोऽसि, मा भैषीः, मयैव ते लघुतरमुपायान्तरमुच्यत इत्युक्ते सति तत्राप्यत्यन्तादररूपोऽविश्वासः स्यादिति भावः ।। १५७ ।।

**(अव)** प्रसङ्गात् भक्तिः स्वरूपविरुद्धा प्रपन्नैः परिहरणीया, अहङ्कारमिश्रत्वात्, स्वस्मिन् कर्तृत्वादिकमारोप्य खलु कर्मयोगादौ प्रवर्तते, अकिञ्चनवत् तूष्णीं नावतिष्ठते, अतोऽहमेव मुक्त्युपायं साधयामीति कर्तृत्वाभिमानदूषिताश्रया सा भक्तिः भगवद्विषयतया शुद्धाऽपि नोपादेया, मद्यभाण्डस्थगङ्गोदकवदिति केषाञ्चिन्मतं निरस्यति-

**(चरम–)**

**मद्योपहतभाण्डस्थतीर्थदृष्टान्तवर्णनम्।**
**अहङ्कारान्वये तु स्यात् प्रपत्तावपि भक्तिवत् ।। १५८ ।।** इति ।।

प्रपत्तावपि अहङ्कारान्वये तु स्यात् भक्तिवत्, तत्राहङ्कारराहित्यं यद्युपपाद्यते भक्तावपि तत्तुल्यमिति भावः ।। १५८ ।।

**(अव)** अत्र केचिच्चरणागतौ कर्तृत्वत्यागहेतुपरिशुद्धात्मस्वरूपयाथात्म्यज्ञानपूर्विकायां कृतायां उत्तरधीपूर्वाघानामप्यश्लेष एवेति वदन्ति-तन्न; भगवदधीनकर्तृत्वस्य व्यवस्थापनादित्युक्त्वा, ''तस्मात् पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'' इति कृतोपायः बालवन्निषिद्धकामचारादिकं कुर्वाणोऽपि न लिप्यत इति वादोऽप्यनुपपन्नः, 'अनाविष्कुर्वन्नन्वयात्' इत्यस्मिन् सूत्रे स्वमाहात्म्यानाविष्कारमात्रपरं 'बाल्येन तिष्ठासेत्' इति वचनमित्यभिधानादित्यभिधाय, ननु? भगवतैव 'अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् । यस्य नाहंकृतो भावः बुद्धिर्यस्य न लिप्यते । हत्वाऽपि स इमां लोकान् न हन्ति न निबद्ध्यते ।। नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्'। इति तत्त्वज्ञानिनः पापालेपोक्तेः बुद्धिपूर्वोत्तरपापाश्लेषवचनमुपपन्नमिति चेन्न । 'प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात्' । 'श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।। आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः' 'नाविरतो दुश्चरितात्, अपायाद्विरतश्शश्वत् माञ्चैव शरणं गतः । तनूकृत्याखिलं पापं मामाप्नोति नरश्शनैः ।, यान्यनवद्यानि कर्माणि, भजन्नपि भवेद् वध्यःभक्तेषु द्वेषकृत् प्रभोः । स्वभक्तायापि भक्तेषु द्वेषिणे मंक्षु कुप्यति ।।' इत्यादिप्रमाणशताबाधाय गीताभाष्यादौ गीतावचनस्य आपद्विषयत्ववर्णनात् 'हत्त्वाऽपि स इमान् लोकान्'इत्यस्य धर्मयुद्धपरतया व्याख्यातत्वाच्चेत्युपपादितम् ।। यत्तु यथोपभुक्तमौषधमेकमेव रोगशान्तिकरमुत्तरकालीनापथ्यसेवनादिदोषहरणक्षमम् वीर्यवत्तरञ्च दृश्यते, तद्वत् प्रपदनमप्युत्तरबुद्धिपूर्वाघाश्लेषकारि मोक्षकारणञ्चास्तु इति न्यायमात्रशरणानां जल्पितं, तत्प्रागुक्तवचनविरोधेन हतमित्याह-

**(चरम –)**

**उपभुक्तौषधन्यायादुत्तरापथ्यमर्दनम् ।**
**अनन्यपरनिर्बाधश्रुतिस्मृतिशतैर्हतम् ।। १५९ ।। इति ।।**

अस्यार्थः- उत्तरधीपूर्वाघरूपापथ्यस्य मर्दनं= अश्लेषकरणं अनन्यपरनिर्बाधश्रुतिस्मृतिशतैः-अनन्यपरैः= स्तावकत्वाद्यान्यपर्यरहितैर्निर्बाधैः= प्रपन्नमधिकृत्यैव प्रवृत्तैर्वचनान्तरप्रतिहतिरहितैरुक्तश्रुतिस्मृतिशतैः हतम् ।। १५९ ।।

**(अव)** अथाहं स्वतन्त्रकारुणिकतया स्वीकृतभरः अकिञ्चनतया मामेवोपायतया स्वीकृत्य मयि न्यस्तभरं त्वां सर्वपापेभ्यो मोक्षयिष्यामि= उपायविरोधिभ्यः प्राप्तिविरोधिभ्यश्च पापेभ्यो मोक्षयिष्यामि; 'पशवः पाशिताःपूर्वं परमेण स्वलीलया। तेनैव मोचनीयास्ते नान्यैर्मोचयितुं क्षमाः' इति वचनान्तर-सारूप्यात् । अत्र, ''मोक्ष असने'' इत्यस्माद्धातोः धातूनामनेकार्थत्वाश्रयणेन वा, 'मुच् मोक्षणे' इति पर्यायत्वेन गणनाद्वा, मोचनार्थकात् 'मोक्ष क्षेपे' इत्यस्माद्वा हेतुमण्णिचि मोक्षयिष्यामीति रूपसिद्धिः । एतेन अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामीत्यर्थः । मोक्षधातोः स्वार्थे णिच्स्वीकारात्, पशुं पाशान्मुञ्चतीतिवत् इति केषाञ्चिद्व्याख्यानमनादेयम्, तदा मुक्तिरपि भगवन्निष्ठा स्यात्, स्वार्थणिजपेक्षया हेतुमण्णिचस्सार्थकत्वात् । अत्र केचिदुत्तरार्धे सर्वशब्दस्यासङ्कोचनीयत्वात् बुद्धिपूर्वोत्तराघेणापि प्रपन्नो न लिप्यत इत्याहुः । तन्न, बहुप्रमाणविरोधात् । प्रपन्नान् अधिकृत्यैव हि 'खञ्जा भवन्ति, काणा भवन्ति, अविधेयपुत्रा भवन्ति, अविधेयभार्या भवन्ति' इत्याद्युपक्लेशविधायिका श्रुतिरुपलभ्यते । 'तस्यायुः कीर्त्तिर्लक्ष्मीश्च विद्या प्रज्ञा च नश्यति ।। जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ।।' इति च, अत एव शिष्टगर्हाबहिष्कारभीताश्च अकृत्यकरणकृत्याकरणादौ न प्रवर्तन्ते । अत एवाविच्छिन्नाचार्यसंप्रदायश्च तथैवेत्यभिधाय, विवेकिनो बुद्धिपूर्वं निषिद्धादौ न प्रवर्तन्ते, मद्ध्यमास्तु निषिद्धाचरणं कृत्वाऽनुतापोपरमप्रायश्चित्ताचरणोन्मुखा भवन्ति, अधमास्तु कठिनचेतसो नानुशेरते, न वा प्रायश्चित्तीयन्ते, तेषामपि शिक्षया निष्कृतिः, नतु तेषां यमविषयगमनं भागवतानामिति निष्कर्षितमेवाह-

**(चरम-)**

**विवेकिनां प्रपन्नानां धीपूर्वागस्यनुद्यमः ।**
**मध्यानामनुतापादिः शिक्षाकठिनचेतसाम् ।। १६० ।। इति ।।**

धीपूर्वागसि; बुद्धिपूर्वापराधे, 'आगोऽपराधोऽमन्तुश्च' इत्यमरः । अनुद्यमः= अप्रवृत्तिः, मद्ध्यानां= आद्यतृतीयपक्षान्तराळे पक्षे स्थास्नवः-अत्यन्तविवेकिनोऽपि न भवन्ति; अतीवकठिनचेतसोऽपि न भवन्ति, मध्यदशावर्तिन इत्यर्थः ।

तेषामनुतापादिरित्यर्थः कठिनचेतसां तु शिक्षेत्यर्थः ।। १६० ।।

**(अव)** नन्वेवं धीपूर्वकनिषिद्धानुष्ठानस्य प्रत्यवायहेतुतया परिहरणीयत्वे विहिताननुष्ठानस्यापि प्रत्यवायहेतुतया तत्परिहाररूपविहितानुष्ठानस्य प्रत्यवायनिवृत्त्यर्थत्वमेव स्यात्, न भगवत्प्रीत्यर्थकभगवत्कैङ्कर्यरूपत्वमित्यत्राह-

**(चरम–)**

**प्रीतिमेव समुद्दिश्य स्वतन्त्राज्ञानुपालने ।**
**निग्रहानुदयोऽप्यस्य नान्तरीयक एव वा ।। १६१ ।।** इति ।।

भगवत्प्रीतिमात्रप्रयोजनकतया स्वतन्त्राज्ञानुपालने नित्यनैमित्तिकाद्यनुष्ठाने इत्यर्थः । अस्य= भगवतः, निग्रहानुदयोऽपि= प्रत्यावायानुदयोऽपि सिद्ध्यन्, नान्तरीयक एव वा= अन्योद्देशेन क्रियमाणात् कर्मणोऽन्यस्य पुमिच्छां विनाऽपि सिद्ध्यतोऽर्थस्य नान्तरीयकत्वादिति भावः । वाशब्दः प्रकृते एवकारार्थानुवादकः, नान्तरीयक एवेत्यर्थः ।। १६१ ।।

**(अव)** तथा च प्रपन्नैरुत्तराघानुदयायावहितैःभगवदाज्ञानुपालनं कर्तव्यं इति स्थितं, तत्रापि ब्रह्मविदपचाराःदूरत एव परिहरणीयाः इत्युपपत्तिपूर्वकमाह-

**(चरम–)**

**ब्रह्मवित्पापवर्गाणामनन्तानां महीयसाम् ।**
**तद्द्वेषिसंक्रमं जानन् त्रस्येत् तदपराधतः ।। १६२ ।।** इति ।।

ब्रह्मविदः पापवर्गाणां अनन्तानां =अवधिराहित्येन गणयितुमशक्यानां महीयसां= महापातकेष्वप्यत्यन्तं महत्त्वं महीयस्त्वं, ब्रह्महत्यास्वपि ब्रूणहत्यावत्, गुरुतल्पेऽपि महागुरुपत्नीसंसर्गवच्च विषयगौरवेण पापगौरवं द्रष्टव्यं, तद्द्वेषिसंक्रमं जानन्; तद्द्वेषिषु संक्रमं तत्र नरकादिहेतुत्वं, 'तस्य पुत्रा दायमुपयन्ति, सुहृदस्साधुकृत्यां, द्विषन्तः पापकृत्यां', इति श्रुतेः, जानन् प्रपन्नः, तदपराधतः= ब्रह्मविदपचारात् त्रस्येत्= बिभीयात्। ननु ब्रह्मविदा सह सौहार्दे सति तत्पुण्यानां सुहृदि प्रपन्ने सङ्क्रमात् स्वर्गाद्यनुभवापत्त्या मोक्षप्रतिबन्धापत्तिरिति चेन्न, ब्रह्मविद्व्यतिरिक्तसुहृत्सु पुण्यसंक्रम इत्याचार्यैः अत्रैवाभिधानात् 'चण्डालमपि

वृत्तस्थं नावमन्येत बुद्धिमान् । अवमानात् पतत्येव नरके रौरवे नरः ।। .... वैष्णवे परिवादाच्च पतत्येव न संशयः । चण्डालमपि मद्भक्तं निषादं श्वपचं तथा ।। पद्मपत्रशतेनापि न क्षमामि वसुन्धरे ।। उपचारशतेनापि न क्षमामि ' इत्यादिवचनैः 'ज्ञानी त्वात्मैव मे मतम् । प्रियो हि ज्ञानिनोऽत्यर्थं अहं, स च मम प्रियः' इत्यादिभिश्च प्रियतमत्वसिद्ध्या तादृशभागवतविद्वेषस्य दुस्सहतमत्व-सिद्धेश्च ब्रह्मविद्द्वेषिणि तत्पापानां संक्रम इति सिद्धम् । ननु? अन्यत्रात्मनि विद्यमानस्यान्यत्र कथं संक्रम इति चेत्-ब्रह्मविदि ब्रह्मविद्योदयप्राक्कालकृत-पापपुण्याभ्यां भगवति निग्रहानुग्रहौ यावुदितौ तत्फलभूते सुखदुःखे अन्यत्रात्म-न्युत्पद्येते । निग्रहो नाम तदनिष्टोत्पादनसङ्कल्पः । अनुग्रहस्तु तदिष्टोत्पादनसङ्कल्पः । ब्रह्मविद्यायां तु जातायां तयोरश्लेषविनाशावित्यपि सिद्धम् । अश्लेषस्तावत्-विद्योत्तरभाविनोस्तयोः, विनाशस्तु विद्यातः पूर्वभाविनोरिति विभागः । कर्मणामश्लेषो नाम-भगवतः स्वाश्रितेषु तत्तत्कर्मफलप्रदानसङ्कल्पानुदयः । विनाशो नाम-फलप्रदानाभिसन्धित्यागः, तर्हि नाश्लेषविनाशयोर्भेदस्स्यात्, मैवं स्वाश्रितविषये कर्मफलं दास्यामीति सङ्कल्पानुत्पत्तिरूपादश्लेषादुत्पन्नसङ्कल्पत्यागस्यात्यन्तं भिन्नत्वात् । एवं तर्हि ''सुहृदस्साधुकृत्याम्'' इत्यादिश्रुतस्संक्रमः कयोरिति चेत् उच्यते, ययोरश्लेषविनाशावुक्तौ तयोः पूर्वोत्तरकालं विद्यानुकूलेष्वनुष्ठितेषु प्रतिबद्धफलानाञ्च संक्रम इति। इदमप्यनुपपन्नम्; सङ्कल्पस्यानुदये त्यागे सति अनुदितस्य त्यक्तस्य च सङ्कल्पस्य पुरुषान्तरेऽपि फलजनकत्वासामर्थ्यात् । विद्यमानं हि बीजं स्वाङ्कुरमुत्पादयेत् , अस्य चासत्त्वादिति चेन्न । ब्रह्मवित्कर्मणि फलप्रदानसङ्कल्पस्यानुदयत्यागानन्तरं तच्चरमदशायां तत्सुहृद्दुर्हृदोः एतत्कर्मफलं दास्यामीति अन्यस्यैव सङ्कल्पस्य तत्सदृशस्योत्पत्तेर्विरोधाभावात् । ननु तर्हि अन्यदीयकर्मणः अन्यत्र फलप्रदाने ईश्वरस्य कर्माधीनफलप्रदत्वं, 'शास्त्रफलं प्रयोक्तरि', इति नियमश्च न सिद्ध्येत् इति चेत् - न- ब्रह्मविद्विषये सुहृद्दुर्हृत्कृतोपचारापचार-रूपकर्मफलत्वेन ब्रह्मवित्पुण्यपापफलं सर्वं दास्यामि इति सङ्कल्पात् फलप्रदाने बाधकाभावात् इति स्थितम् ।

संक्रमप्रसङ्गात् विद्याक्षपयितव्यानामनुभाव्यानाञ्च पापानां विभागनिष्कर्षः ग्रन्थकृदुक्तप्रकारेण बुद्धिसौकर्याय लिख्यते- पापं द्विविधं, प्रारब्धं, अप्रारब्धञ्चेति। तदुभयञ्च पुण्यं पापञ्चेति द्विरूपम् । प्रारब्धमपि अभ्युपगतं अनभ्युपगतञ्चेति द्विविधम् । तच्च विद्यारंभात् प्राक्कालोत्पन्नं, समकालोत्पन्नं, उपरितनञ्चेति त्रिविधं; "कृतान्, क्रियमाणान्, करिष्यमाणान्" इत्युक्तत्वात् । इदं त्रिविधमपि पापं प्रामादिकं, धीपूर्वञ्चेति द्विविधं; उपायनिष्पत्त्यौपयिकतयाऽनुष्ठितसत्कर्मणा जनितं पुण्यरूपं दत्तफलं अदत्तफलञ्चेति द्विविधं, 'यदेव विद्यया करोति तदेव वीर्यवत्तर' मिति वीर्यवत्तरकर्मजन्यपुण्यपापाभ्यां प्रतिबद्धफलं यन्न भवति तदारब्धकार्यं प्रारब्धमित्यप्युच्यते । यत्तु तादृशप्रबलकर्मणा प्रतिबद्धं तदेवानारब्धकार्यं अप्रारब्धमित्यपि शब्द्यते । तदेव विद्यया नाश्यं, "अनारब्धकार्य एव तु पूर्वे तदवधेः" इति सूत्रितम् । अत्र पूर्वशब्दः विद्यारंभकालीनस्याप्युपलक्षकत्वात् तदपि नश्यति, विद्यातःप्रपत्तिकाले आर्तस्य वा दृप्तस्य वा एतद्दिवसे एतज्जन्मनि वा परिच्छिन्नं मम पापमहम् अनुभविष्यामि, दिवसान्तरजन्मान्तरानुभाव्यं मया न शक्यमनुभवितुं, तत् त्वमेव नाशयेत्यनभ्युपगतप्रारब्धमपि विद्यामाहात्म्यात् नश्यति। अभ्युपगतं तु अनुभवेन अवान्तरप्रायश्चित्तैश्च नाश्यम् । उत्तराघेष्वपि प्रामादिकं देशकालवैगुण्यात् प्राप्तं धीपूर्वञ्च न श्लिष्यति; अनापदि धीपूर्वमुत्तराघं पुनःप्रपत्त्या कौटिल्ये शिक्षया नाश्यमिति, यच्चादत्तफलमितरेण प्रतिबद्धं अवशिष्टं- तदप्यश्लेषशास्त्रस्य विषयः। विद्योत्पत्तिं कृत्वा यच्चरितार्थं तत्तदैव नष्टम् । एवञ्च प्रपत्तिरनभ्युपगतप्रारब्धस्यापि निहन्त्री, 'उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी। साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ।।' इत्यादिवचनात् । 'यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत्साङ्ख्येन न योगेन न भक्तितः ।। तेन तेनाप्यते तत्तन्न्यासेनैव महामुने' इति सर्वकामफलप्रदत्वकण्ठोक्त्या, एतद्विवक्षितकाल एव मोक्षम् प्राप्नुयामीत्यभीष्टसिद्धये शरणवरणे सति तथैव फलाविनाभावावश्यंभावाच्च । तदुक्तम् -' सुदुष्करेण शोचेद् यो येन येनेष्टहेतुना । सस तस्याहमेवेति चरमश्लोकसंग्रहः ।' इति ।

केचिदेवमाक्षिपन्ति, 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यति' इति, 'यथैषीकातूलमग्नौ प्रोतं प्रदूयेत। एवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते,' इत्यश्लेष विनाशश्रुत्योः पापविशेषणीभूतसर्वपदे जाग्रत्यपि 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि, भोगेन त्वितरे क्षपयित्वा, अनारब्धकार्य एव तु पूर्वे तदवधेः' इति वचनानुरोधात् मुमुक्षोः प्रारब्धं अनुभवैकनाश्यं न विद्यानाश्यमिति व्यवस्थापनात्, प्रपत्तौ तन्न्यायः किं नाम काकभक्षितः । 'साध्यभक्तिस्तु सा हन्त्री' इति वचनशकलमपि प्राशस्त्यपरं नेतव्यम्, उक्तश्रुतिस्थसर्वपदसङ्कोचकात्, 'तस्य तावदेव चिर'मिति श्रुतिसाचिव्यात् 'नाभुक्तं क्षीयते' इत्यादिवचनादपि अस्य दुर्बलतमत्वात् । 'यद्येन' कामेन 'इत्येतदपि' सर्वेभ्यः कामेभ्यः दर्शपूर्णमासौ इतिवत् कम अर्थवाद एव, अन्यथा सशरीर एव मुक्तिमाप्नुयामिति प्रपत्तुश्शरीरे अस्मिन्नेव अर्चिरादिगमन-वैकुंण्ठप्राप्तिप्रसङ्गः । शुकव्यासादीनां सद्य एव मुक्ति साधनन्यासविद्यायां किमिति न प्रवृत्तिः; प्रपत्तिस्वरूपाज्ञानाद्वा? तत्राविश्वासाद्वा? असामर्थ्याद्वा? तदेतत्त्रितयमप्याचार्यैरेव प्रतिक्षिप्तम्, न च 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति विळंबसहत्वं तेषामिति वाच्यं; अनधिकारिणामपि महर्षीणां योगनिष्ठानामेव श्रुतचरत्वात्; किंतु प्रपत्तावपि प्रारब्धकर्मणां यावतामपि अनुभवैकनाश्यत्वमुपलभ्य विळंबसाम्यात् ते प्रपत्तावनवतीर्णा इत्यवश्यं वक्तव्यमिति ।

अत्रेदमालोचनीयं - ''सर्वे पाप्मानः प्रदूयन्ते'' इत्यत्रावश्यं सर्वपदसंकोचेन भाव्यं; संकोचकं च प्रमाणं नोक्तस्मृतिवचनं ''नाभुक्तं क्षीयते'' इत्यादिरूपं तस्य श्रुतितो दुर्बलत्वात्, ''तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये'' इति शरीरपातावधिकसंसारानुवृत्त्यभिधानात्-उपासकशरीरस्य तत्काल एव नाशानुपलंभेन प्रत्यक्षविरोधे शास्त्रस्याप्रवृत्तेरत उक्तश्रुतिप्रत्यक्षविरोधात् वरं श्रुतिस्थसर्वपदस्यार्थ-संकोचः - नतु ''नाभुक्तम्'' इत्यस्य प्राबल्यात्, यदिच 'नाभुक्तम्' इत्यादिवचनमेव प्रबलं तदा प्रारब्धेतरपूर्वपापानामपि यदाकदाचित्कल्पकोटिशतानन्तरकाले प्रतिबंधकसंक्षयसं-भवेन तदा लब्धावकाशानां तदानीमेव फलप्रदातृत्वोपपत्तेर्न

कस्याप्यघस्या-श्लेषस्स्यात् - अतोऽवश्यं 'सर्वे पाप्मानः प्रदूयन्ते' 'सर्वपापेभ्यो मोक्षयिष्यामि' इत्यनयोर्बाधितार्थकत्वात् प्राशस्त्यमात्रपरत्वमाश्रयितव्यं स्यात् । यदि च वचनानां परस्परविरोधशमनाय प्रारब्धतदितरपरत्वेन विषयभेदः क्रियते, तदा "साध्यभक्तिस्तु सा हन्त्री" इत्यस्याप्यनुग्रहायाभ्युपगतप्रारब्ध मात्रस्यानुभवनाश्यत्वमभ्युपगम्यताम् । एतस्य वचनशकलस्यान्यपर्ये "नाभुक्तम्" इत्यस्यापि वचनशकलत्वादान्यपर्यं स्यात् । यत्तु "यद्येन कामकामेन" इति वचनस्य "सर्वेभ्यःकामेभ्यो दर्शपूर्णमासौ" इति वदर्थवादत्वमिति; तन्न - काक- कपोत-राक्षस्यादिशरणागतीनां प्राणत्राणादि-कामैरनुष्ठितानां फलाव्यभिचारदर्शनात्, दृष्टान्ते तथाऽनुपलम्भात्, यच्च सशरीरतया वैकुण्ठारोहणापादनं तदपहास्यं, प्राकृतशरीरस्य प्रकृतिविनिर्मोक्षस्य च मिथो विरोधात् । न चैवमत्र प्रारब्धनाशकत्वं विरुद्धं, कर्मविपाकादिनिवारकतिलहोमादिशास्त्राणां व्याधिहेतुभूतजन्मान्तरीयकर्म-प्रायश्चित्तरूपाणां बहुशो दर्शनात्, तद्वत् कतिपयानभ्युपगतारब्धखण्डना-शकत्वाभ्युपगमे भवतां किं बाधकं स्यात् । यदपि व्यासादीनामित्यादि तदपि न । तेषामाधिकारिकत्वेन विलम्बक्षमतया भक्त्यादौ शक्तत्वेन च प्रपत्तावनधिकारात्, अनाधिकारिकाणां प्रसिद्धमहर्षीणां विलम्बक्षमत्वे भक्त्यादौ तदक्षमत्वे प्रपत्तावेव प्रवृत्तिरस्तु बाधकाभावात् इति ।। प्रकृतमनुसरामः ।। १६२ ।।

**(अव)** पूर्वोक्तश्लोके ब्रह्मविदपचारस्य दूरतः परिहरणीयत्वे हेतुमुक्त्वा इदानीं ब्रह्मविद्विरोधिसंसर्गोऽपि दूरतस्त्याज्य इत्याह-

**(चरम-)**

**सापराधेषु संसर्गेऽप्यपराधान् वहत्यसौ ।**
**वोढुमीश्वरकृत्यानि तद्विरोधादभीप्सति ।। १६३ ।। इति ।।**

असौ; प्रपन्नः ब्रह्मविद्विषये सापराधेषु संसर्गेऽपि अपराधान् वहति ब्रह्मविद-पराधी, तन्मुखेन भगवदपराधी च भवति इति भावः । तर्हि ब्रह्मविदपराधिनः दण्डनमेव प्रपन्नेन कर्तव्यं, भगवद्भागवतप्रसादसिद्ध्यर्थमित्यत्र, तदपि न कर्तव्यं, स्वगतभगवत्पारतन्त्र्यस्वरूपविरोधात्, तस्मादुपेक्षैव कार्येत्यभिप्रयन्नाह-वोढुमिति । असौ तद्विरोधात्= ब्रह्मविद्द्वेषिणि विरोधात् असहमानस्सन् ईश्वरकृत्यानि, ईश्वरस्य= भगवतः राज्ञो वा कृत्यानि स्वातन्त्र्यदण्डनावमानादीनि वोढुमभीप्सति; इच्छामात्रं

कुर्वन्नासीत । तन्निग्रहादुवुपेक्षेतेंत्याहुः । एवं वा- असौ= भागवतापराधिसंसर्गी ईश्वरकृत्यानि भागवतकैङ्कर्याणि वोढुं प्रापयितुं वा कर्तुं वा तद्विरोधात्, 'ल्यब्लोपे पञ्चमी', तद्विरोधमाश्रित्यैव भगवत्कैङ्कर्यं कर्तुमभीप्सति; आरभते । तद्विरोधमाश्रित्यैव तत्कृत्यानि वोढुमभीप्सति, आश्चर्यमित्यर्थः ।। १६३ ।।

**(अव)** अथ मा शुच इत्यस्य व्याख्यानावसरे अयं अर्जुनस्य चरमश्लोकश्रवणाव्यवहितप्राक्कालीनश्शोकः किंहेतुक इति विवेचनीयं, न तावत् बन्धुनाशगुरुवधस्ववधादयः शोकनिमित्ततया वक्तुं शक्यन्ते, तदितरशोकास्सर्वेऽपि 'अशोच्यानन्वशोचस्त्वं' इत्युपक्रम्य 'तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि' इत्यन्तेन तत्त्वस्थितिक्षत्रियधर्मप्रदर्शनादिना निवारिता एव । तथा 'दैवी सम्पद् विमोक्षाय निबन्धायासुरी मता' इति श्रुत्वा स्वस्मिन्नपि आसुरीसम्पदस्ति न वेति संभावनाजनितार्जुनशोकप्रमार्जनं च 'मा शुचस्संपदं दैवीमभिजातोऽसि पाण्डव' इति तदानीमेव कृतमिति न तादृशाश्शोका इह निषिद्ध्यन्ते तेषां प्रागेव निरस्तत्वात्; किन्त्वन्य एव वक्तव्य इत्यभिप्रयन्नाह-

**(चरम-)**

**बन्धुनाशादयः पूर्वं बहवश्शोकहेतवः ।**
**तत्तत्समुचितैः सम्यगुपदेशैरपोदिताः ।। १६४ ।।** इति ।।

बन्धुनाशादयः, बन्धुशब्दः गुरूणां गजतुरगादिजन्तूनां स्वात्मनश्चोपलक्षणाम्, आदिशब्देन मध्ये मध्ये आसुरसंपत्संभावनाप्रभृतयो गृह्यन्ते, बहवश्शोकहेतवः तत्तत्समुचितैः= तत्तच्छोकनिवारणसमर्थैः इत्यर्थः । उपदेशैः सम्यक्= निश्शेषतया अपोदिताः इति ।। १६४ ।।

**(अव)** तर्हि चरमश्लोकोपदेशात् प्राक्कालीनशोकनिमित्तं किमित्याकाङ्क्षायामाह-

**(चरम-)**

**सुदुष्करत्वात् धर्माणाम् अपारत्वाद् विरोधिनाम् ।**
**सिद्धः फलविलम्बाच्च शोकोऽत्र विनिवार्यते ।। १६५ ।।** इति ।।

मोक्षहेतुतयोपदिष्टानां धर्माणां कर्मयोगादीनां दुरनुष्ठानत्वात्, विरोधिनां= उपायोपेयविरोधिनां पापादीनां, कामक्रोधादीनाञ्च अपारत्वात्= अनवधिकत्वात्, कालविलम्बाच्च 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते' इत्यादिवचनसिद्धात् । चकारःउक्तानुक्तसमुच्चयार्थः । सिद्धश्शोकोऽत्र= 'मा शुच' इत्यस्मिन् वाक्ये विनिवार्यते। सुदुष्करधर्माणां परित्यागोक्त्या सर्वपापविमोक्षणोपायत्वस्य स्वात्मन्येवाङ्गीकृतत्वात् तत्क्षण-तद्दिवस-तज्जन्मावधिकप्रारब्धेतरसर्वपापनिवर्तन-कालस्यार्तदृप्तप्रपन्नाभ्युपगतस्य मोक्षयिष्यामीति पदेन चाग्रे विवक्षितत्वात्, हेतुत्रयजन्यस्सर्वोऽपि शोकः भगवता परमकारुणिकेन निषिद्ध्यत इति भावः ।। १६५ ।।

**(अव)** ननु! विद्यया प्रारब्धराशिं सर्वं क्षपयित्वा सद्यश्शरीरं पातयन् आत्महा स्यात्, आत्महत्यायां च महान् प्रत्यवायस्स्यात् इत्यत आह-

**(चरम-)**

**प्रायश्चित्तविशेषेषु सर्वस्वारादिकेषु च ।**
**नात्महिंसनदोषोऽस्ति तथाऽऽर्तशरणागतौ ।। १६६ ।।** इति ।।

प्रायश्चित्तविशेषेषु ''यः कामतो नरः कुर्यात् महत् पापं कथञ्चन । न तस्य निष्कृतिः दृष्टा भृग्वग्निपतनादृते ।।'' ''अन्त्येन सह सम्पर्के भोजने मैथुने कृते। प्रविशेत् सम्प्रदीप्ताग्नौ मृत्युनाऽसौ विशुद्ध्यति ।।, स्तेनः प्रकीर्णकेशोंऽसे मुसलमादाय राजानं गत्वा कर्माचक्षीत, तेनैनं हन्यात्, पथे(वधे?) मोक्षः'' इत्यादि प्रायश्चित्तविशेषेषु । सर्वस्वारादिकेषु; ''सर्वस्वारश्शुनःकर्णस्तोमेन मरणकामो यजेत ।'' 'यः कामयेतानामयता स्वर्गं लोकं यामी'ति ''ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत् ।'' 'ये वै तन्वां विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते,' इत्यादिषु तत्र यथा आत्महननादिदोषो नास्ति वचनबलात्, तथा = तद्वत् 'आर्तानामाशुफलदा सकृदेव कृता ह्यसौ,' इत्यादिवचनबलात् आर्तशरणा-गतावपि न दोषोऽस्ति, प्रत्युतासावार्तः स्वात्मरक्षक एवेति भावः ।। १६६ ।।

**(अव)** अथ आर्त इव दृप्तोऽपि महापुरुषार्थलिप्सात्वरया **''सर्वथैव** आत्मानं गोपायेत्'' इति शास्त्रार्थमुल्लङ्घ्यापि जलवह्निसर्पव्याध्यादिना प्राणत्यागं किमिति न करोतीत्यत्राह-

**(चरम-)**

**दृप्तस्य तु यथाशास्त्रं चिरं जीवितुमिच्छतः ।**
**प्राणरक्षणशास्त्रार्थलङ्घनं त्वपराधनम् ।। १६७ ।।** इति ।।

यथाशास्त्रं= भगवदाज्ञामनतिलङ्घ्यैव चिरं जीवितुमिच्छतः दृप्तस्य तु प्रपन्नस्य प्राणरक्षणशास्त्रार्थलङ्घनं ''सर्वथैवात्मानं गोपायेत्,'' इत्यादिशास्त्रार्थलङ्घनं अपराधनं,भगवदाज्ञाव्यतिवर्तनात् प्रत्यवायस्स्यादेव । आर्तस्य तु न तथा, प्राप्तौ विलम्बमसहमानस्य चिरं जिजीविषाविरहात्, ''अत्यन्तभक्तियुक्तानां नैव शास्त्रं न च क्रमः'' इति शास्त्रेणैव तद्व्यतिरिक्तविषयतयैव इतरशास्त्रीयमर्यादायाः व्यवस्थापनाच्च न प्रत्यवाय इति भावः ।। १६७ ।।

**(अव)** एवं चरमश्लोकतात्पर्यं प्रकाश्य स्वोक्तार्थस्य साम्प्रदायिकत्वं वदन् स्वाचार्याणां न केवलं चरमश्लोकार्थज्ञानमात्रं, किन्तु अनुष्ठानं तत्फल-भूतनिश्शोकत्वञ्चेति प्रकटयन्नाह-

**(चरम-)**

**एकं सर्वप्रदं धर्मं श्रिया जुष्टं समाश्रितैः ।**
**अपेतशोकैराचार्यैरयं पन्थाः प्रदर्शितः ।। १६८ ।।** इति ।।

* * *

## अथ सम्प्रदायप्रक्रियाभागः ।।

अथ अर्थानुशासनिक-स्थिरीकरण-पदवाक्ययोजनाभागान् प्रदर्श्य सम्प्रदायप्रक्रियाभाग आरभ्यते ।

तत्र प्रथममाचार्यलक्षणमभिधाय, सच्छिष्यायैवोपदेष्टव्यमिति वर्जनीयान् नास्तिकादीन् पर्युदस्य, सच्छिष्यायोपदेष्टव्यप्रकारमप्यभिधाय, स्वस्मै

स्वाचार्यास्स्वयमेव तत्त्वहितपुरुषार्थस्वरूपं तत्त्वत्रयस्वरूपं च सम्यगुपदिष्टवन्त इति साम्प्रदायिकत्वं, महाधनत्वेन निरूपणात् संरक्षणीयत्वं चाह-

* * *

## आचार्यकृत्याधिकारे ।।

**प्रत्येयस्तु (प्रत्यग्वस्तु) विलक्षणः प्रकृतितस्त्राता पतिस्तत्पर-स्तस्मिन्नात्मभरार्पणं हिततमं तच्छेषवृत्तिः फलम् ।**

**इत्थम् तत्त्वहिते पुमर्थ इति नस्त्रेधा विभक्तं धनं**

**दायत्वेन दयाधनास्स्वयमदुर्दत्तात्मनां देशिकाः ।। १६९ ।।**

प्रत्येयस्तु विलक्षण इति - जीवात्मेत्यध्याहार्यम् । जीवात्मा प्रकृतितः = प्रधानात् । प्रकृतिशब्दस्तत्कार्यवर्गाणामुपलक्षणार्थः । पतिः - ''प्रधानक्षेत्रज्ञपतिः गुणेशः, आत्मेश्वरम् शिवमच्युतम्'' इत्यादिसिद्ध-चेतनाचेतनपतिः । तत्परः= ताभ्यां चिदचिद्भ्यां परः - अतिरिक्तः, स एव त्राता - रक्षकः, पतित्वं रक्षकत्वं च प्रणवस्थाकारप्रकृतिप्रत्ययार्थ इति ध्वनितम् । तस्मिन्नात्मभरार्पणमिति नमश्शब्दार्थः । हिततमम्= भगवद्वशीकारद्वारा मुक्त्युपायम्- ''यम् त्वं मनुष्याय हिततमं मन्यसे'' इत्यत्र हिततमशब्देन मोक्षोपाय उच्यत इत्यभिहितम् । तच्छे-षवृत्तिः= तद्विषयपरिपूर्णानुभवजनितनिरतिशयप्रीतिकारितकैङ्कर्यमेव फलमित्यर्थः । इत्थम् = एवम् प्रकारेणोपदिश्य तत्त्वहिते पुमर्थः - पुरुषार्थश्चेति त्रेधा - त्र्यात्मकतया विभक्तम् - दयाधनाः दययैव प्रसादितवन्त इत्यर्थः - न तु प्रयोजनान्तरस्पृहयेति भावः देशिका इति निधिस्थदेशज्ञा इति ध्वनितम् । दत्तात्मनाम् आचार्येषु प्रथमं न्यस्तभराणां नः; स्वयमिति दयापारवश्यादिव्यञ्जनम् । दायत्वेनादुः त्वदीयोऽयमंश इति पिता पुत्राय प्रवसिताय धनं चिराय स्थापयित्वा पुनः प्राप्ताय यथा ददाति, तथा दत्तवन्त इति भावः । न इति तद्दयाविषयत्वेन स्वात्मनि पूजायां बहुवचनम् । स्वस्य सब्रह्मचारिभिस्सह वा निर्देशः ।। १६९ ।।

एवम् आचार्यकृत्यमुक्त्वा, शिष्यकृत्यमपि अनन्तराधिकारे बहुश उक्त्वा,

स्वाचार्यविषये कृतज्ञतामेव प्राधान्येन कर्तव्यतामुपदिश्य, तत्र पञ्चसंस्कारप्रदाः वेदान्तशास्त्रप्रवचनमुखेन तत्त्वयाथात्म्यप्रकाशननिरुक्त- प्रबन्धाध्यापनमुखेन भगवद्गुणानुभवरूपपुरुषार्थप्रदाश्च पुरुषार्थप्राप्त्युपायभूतविद्याभेदोपदेशपराश्चेति बहवस्सम्भाव्यन्ते - नह्येकस्मादेव सर्वं सर्वोऽपि अधिकर्तुं प्रभवति, तेषु भगवत्प्राप्त्युपायप्रदर्शक एव श्रेष्ठतमो गुरुः - सर्वत्र गुरुषु उपकारस्मृतिसाम्येऽपि तत्र विशेषप्रतिपत्तिः कार्येत्यभिप्रेत्याह -

* * *

## शिष्यकृत्याधिकारे ।।

**साक्षान्मुक्तेरुपायान् यो विद्याभेदान् उपादिशत् ।**
**कथ्यते मोक्षशास्त्रेषु स तु श्रेष्ठतमो गुरुः ।। १७० ।। इति ।।**

यः मुक्तेरुपायान् विद्याभेदान् साक्षात्= अव्यवधानेनोपादिशत् । साक्षादिति परम्परयोपदेष्टृभ्यःपरमगुरुभ्योऽव्यवहितोपदेष्टुस्स्वाचार्यस्यात्यन्तोपकारकत्वाद-भ्यर्हिततमत्वं विवक्षितम् । विद्याभेदानिति । वहारादिभेदाः( ?) प्रपत्तिपर्यन्ता विवक्षिताः - स तु श्रेष्ठतमो गुरुरिति मोक्षशास्त्रेषु कथ्यते - ''देवमिवाचार्यमुपासीत - आचार्यवान् पुरुषो वेद - यस्य देवे परा भक्तिः'' इत्यादिषु - वेदनप्रदाचार्यस्य देवसाम्यप्रतिपादनाच्छ्रेष्ठतमत्वम् ब्रह्मविद्याप्रदस्येति भावः । तत्र परम्परया ब्रह्मविद्योपयोगिविद्यान्तरोपदेष्टारोऽपि गुरव एव; तेभ्योऽपि तत्त्वत्रयप्रकाश-कशास्त्रप्रवक्तारः - गुणानुभवादिहेतुप्रबन्धव्याख्यातारश्च श्रेष्ठा गुरवः । ततोऽपि मुक्त्युपायोपदेशिनो हिततमप्रवर्तकतया श्रेष्ठतमा गुरवः; तत्राप्यकिञ्चना-स्मदादिरक्षणाय दयया प्रवृत्ताः प्रपदनशास्त्रोपदेशपूर्वकम् ब्रह्मणि श्रीनिवासे न्यस्तात्मरक्षाभरं च कारयित्वा मोक्षे प्रातिभाव्यमाश्रितवन्तो गुरुचरणा एवोद्देश्यतमा इति सर्वैरपि तद्विषये कृतज्ञैः स्थातव्यमिति तात्पर्यम् ।। १७० ।।

न केवलमुपकारस्मृत्या वर्तितव्यमाचार्यविषये; किन्तु प्राप्यं प्रापकं च तस्य चरणद्वयमिति स्थातव्यम् निर्भरतयेत्यत्र श्रुतिस्मृतिप्रसिद्धिं द्योतयन्नाह-

**(शिष्य–)**

**आचार्यवत्तया मोक्षमामनन्ति स्मरन्ति च ।**
**इहामुत्र च तत्पादौ शरणं देशिका विदुः ।। १७१ ।। इति ।।**

"आचार्यवान् पुरुषो वेद" इति विद्याद्वारा मोक्षप्रदत्वादाचार्यस्य आचार्यवत्तया मोक्षमामनन्ति आम्नायाध्यायिन इत्यर्थः ।

स्मरन्ति च - "आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत् - गुरुरेव परायणम् - गुरुरेव परा गतिः" इत्यादिस्मृतीरुदाहरन्ति स्मर्तार इत्यर्थः । तस्मात् इहामुत्र च तत्पादौ - आचार्यपादौ शरणमिति देशिकाः - यामुनादयः विदुः - "अत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम्" इत्यभिदधुः । तस्मादाचार्यचरणावेव शरणमिति सर्वदा न्यस्तभरैस्सुखेन वर्तितव्यमिति भावः ।। १७१ ।।

इति श्रीमदात्रेयवरदाचार्यचरणाम्बुजचञ्चरीकस्य तत्सुतश्रीनिवासाचार्यकरुणैकजीवितस्य वरदकवेः कृतौ कारिकादर्पणे सम्प्रदायप्रक्रियाभागस्तुरीयः ।

**बालस्य मेऽग्रजो भ्राता पितामह इवापरः ।**
**सारज्ञस्सुन्दराचार्यः संप्रदायानुपादिशत् ।।**

**क इह निगमचूडाचार्यसूक्तौ निगूढं**
**करबदरकृती स्यान्मां विना साहसिक्यात् ।**
**निधिमिव जननान्धो निर्भयो वा तथापि**
**प्रतिभुव इव यन्मे देशिका दर्शयन्तु ।।**

।। कारिकादर्पणं सम्पूर्णम् ।।

श्रीमते निगमान्तमहादेशिकाय नमः ।।

* * *

।। श्रीः ।।

श्रीमते निगमान्तमहादेशिकाय नमः ।।

## ஸம்ஸ்க்ருத ப்ரமாணங்களின்

# முழுப்பகுதி

**अकिञ्चनो**– न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चारणारविन्दे ।
अकिञ्चनोऽनन्यगतिः शरण्य! त्वत्पादमूलं शरणं प्रपद्ये ।। —ஆள.ஸ்தோ. 22

भक्त्येकलभ्यः पुरुषोत्तमोऽसौ जगत्प्रसूतिस्थितिनाशहेतुः ।
अकिञ्चनोऽनन्यगतिः शरण्य! गृहाण मां क्लेशिनमम्बुजाक्ष! ।।

—ஜிதந்தா. 2-15

**अक्रियाव** – क्रियमाणं न कस्मैचिद्यदर्थाय प्रकल्पते ।
अक्रियावदनर्थाय तत्तु कर्म समाचरेत् ।। —லக்ஷ்மீதந்த்ரம் 17-88

अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा ।
पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ।। —ராமா.ஆரண். 11-1

अज्ञातं नास्ति ते किञ्चित् त्रिषु लोकेषु राघव ! ।
आत्मानं पूजयन् राम ! पृच्छस्यस्मान् सुहृत्तया ।। —ரா.யுத்த.17-35

**अणीयान्** – न कल्माषो न कपिलो न कृष्णो न च रोहितः ।
अणीयान् क्षुरधारायाः को धर्मं वक्तुमर्हति ? ।। —பார.உத்.34-30

अण्वप्युपहृतं भक्तै : प्रेम्णा भूर्येव मे भवेत् ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ।। —பாகவதம் 10-81-3

**अतोऽहं** – दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः ।
अतोऽहमपि ते दास इति मत्वा नमाम्यहम् ।। —மந்த்ரராஜ தோத்.ஸ்.12

**अत्युत्कटैः** – त्रिभिर्दिनैस्त्रिभिः पक्षैस्त्रिभिर्मासैस्त्रिवत्सरैः ।
अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते ।। —விஹகேந்த்ரஸம்.?

**अनन्तस्य** – महान्तं च समावृत्य प्रधानं समुपस्थितम् ।
अनन्तस्य न तस्यान्तः सङ्ख्यानं वाऽपि विद्यते ।। —வி.பு. 2-7-25

अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्ता मद्भक्तास्ते प्रकीर्तिताः ।। —பார. ஆச். 104-91

अनन्याधीनकल्याणमन्यमङ्गलकारणम् ।
जगन्निदानमद्वन्द्वं द्वन्द्वं वन्दामहे वयम् ।। —லக்ஷ்மீகல்யாணம்

**अनन्या** – शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ।
अनन्या राघवेणाहं भास्करेण प्रभा यथा ।। —ரா.ஸு. 21-15

अनागतानन्तकालसमीक्षयाऽप्यदृष्टसंतारोपायः निखिलजन्तुजातशरण्य ।
श्रीमन् ! नारायण ! तव चरणारविन्दयुगलं शरणमहं प्रपद्ये ।।
—ஸ்ரீரங்ககத்யம் 2

अनादिर्भगवान् कालो नान्तोऽस्य द्विज! विद्यते ।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसम्यमाः ।। —வி.பு. 1-2-26

अनालोचितविशेषाशेषलोकशरण्य..........अनन्यशरणस्त्वत्पादारविन्द-
युगलं शरणमहं प्रपद्ये ।। —சரணாகதிகத்யம் 5

**अनित्यम** – किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ।। —கீதை 9-33

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ।। —கீதை 18-12

**अनुष्ठित** – एवं रूपं तमभ्यर्च्य प्रक्षीणाशेषपातकः ।
अनुष्ठितक्रतुशतो भवत्येव न संशयः ।। —அஹிர்.ஸம்.37-49

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ।। —கீதை 7-23

अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ।। —ரா. ஆர. 37-18

अपायेभ्यो निवृत्तोऽस्मि पातकेभ्यो भवोदधौ ।
तथाऽप्यत्र प्रवृत्तिर्या त्वत्स्मृतेः साऽपि नश्यतु ।। —ல.த. 50-215

अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् ।
प्रकृष्टसत्त्वराशिं तं कदा द्रक्ष्यामि चक्षुषा ? ।। —ஜிதந்தா. 2-21

अप्रार्थितो न गोपायेदिति तत्प्रार्थनामतिः।
गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम् ।। —ல.த. 17-72

**अभियाचाम** - तदलं क्रूरवाक्यैर्वः सान्त्वमेवाभिधीयताम् ।
अभियाचाम वैदेहीमेतद्धि मम रोचते ।। —ராமா. ஸு. 27-42

अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधेरपारादुत्तीर्णस्तव परिचरेयं चरणयोः ? ।।
—ஆள. ஸ்தோ. 62

अमृतं साधनं साध्यं यं पश्यन्ति मनीषिणः ।
ज्ञेयाख्यं परमात्मानं विष्णुं ध्यायन्न सीदति ।। —வி.தர். 72-4

**अलमेषा** - प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।
अलमेषा परित्रातुं राक्षसीर्महतो भयात् ।। —ரா.ஸு. 27-46

अलमेषा परित्रातुं राघवाद्राक्षसीगणम् ।
अभियाचाम वैदेहीमेतद्धि मम रोचते ।। —ரா-ஸு. 58-87

**अविज्ञाता** - धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ।। —ஸஹஸ்ரநாமம் 51

अविद्यातो देवे परिबृढतया वा विदितया
स्वभक्तेर्भूम्ना वा जगतिगतिमन्यामविदुषाम् ।

गतिर्गम्यश्चासौ हरिरिति जितन्ताह्वयमनो
रहस्यं व्याजह्रे स खलु भगवान् शौनकमुनि: ।। —பட்டர் முக்தகம்

अव्यक्तार्थतयोङ्कार: केवलं नैव साधक: ।
पक्वयोगशरीराणामेवं ज्ञानवतामपि ।। —சாண்டில்ய ஸ்ம்ருதி 5-71

अशास्त्रमासुरं कृत्स्नं शास्त्रीयं गुणत: पृथक् ।
लक्षणं शास्त्रसिद्धस्य त्रिधा सप्तदशोदितम् ।। —கீதா.ஸங். 21

**अशुद्धास्ते** -'हिरण्यगर्भो' என்ற தொடக்கம் பார்க்க.
अष्टौ गुणा: पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दम: श्रुतं च ।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ।।
—பாரதம் உத்யோகபர்வம் 32-106

**अस्तु मे** - पारमार्थिक भगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिक परभक्ति परज्ञानपरमभक्तिकृत परिपूर्णानवरत नित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशय प्रीतिकारिता शेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्त्यपेक्षया पारमार्थिकी भगवच्चरणारविन्दशरणागतिर्यथावस्थिता अविरता अस्तु मे ।।
—சரணாகதிகத்யம் 2

अस्य जीवा ..........विध्वंसनाय देहातिरिक्तात्मस्वरूपतत्स्वभाव तदन्तर्यामिपरमात्मस्वरूपतत्स्वभावतदुपासनतत्फलभूतात्मस्वरूपाविर्भावपूर्वकानवधिकातिशयानन्दब्रह्मानुभवज्ञापने प्रवृत्तं हि वेदान्तवाक्यजातं 'तत्त्वमसि' ........इत्यादिकम् ।। —வேதார்த்தஸங்க்ரஹம்

अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जित: ।
बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरि: ।। —வி.பு. 1-22-76

**अस्वर्ग्यं** - कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।। —யாஜ்ஞ. ஸ்ம். 1-156

**अहमद्यैव** – वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः ।
तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ।। —ஆள. ஸ்தோ. 52

**अहमपि** – पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्
त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम् ।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं
प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ।। —ஆள.ஸ்தோ. 60

अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः ।
त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ।।
शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ।।
—அஹிர்புத்ந்ய ஸம்ஹிதை 37-30, 31

**अहं त्वा** – सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।। —கீதை 18-66

अहं भीतोऽस्मि देवेश ! संसारेऽस्मिन् भयावहे ।
पाहि मां पुण्डरीकाक्ष ! न जाने शरणं परम् ।। —ஜிதந்தா 1-8

**अहं सर्वं** – भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ।। —ரா.அ. 31-27

अहं स्मरा–'स्थिते मनसि' என்ற தொடக்கம் பார்க்க.

अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ।।
—விஷ்ணுபுராணம் 1- 22- 87

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।। —கீதை 9-24

आत्माऽपि चायं न मम सर्वाऽपि पृथिवी मम ।
यथा मम तथाऽन्येषामिति पश्यन् न मुह्यति ।। —பார.சாந். 25-19

आत्माऽपि चायं न मम सर्वा वा पृथिवी मम ।
यथा मम तथाऽन्येषामिति मत्वा न मे व्यथा ।। —பார.சாந். 173 - 15

**आत्मविद्या** – यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ! ।
आत्मविद्या च देवि ! त्वं विमुक्तिफलदायिनी ।। —வி.பு. 1-9.120

आत्मा केवलतां प्राप्तो यत्र गत्वा न शोचति ।
ईदृशं परमं स्थानं निरयास्ते च तादृशाः ।। —பார. சாந். 196-11

आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते । —லக்ஷ்மீதந்த்ரம் 17-79

**आत्मानुरूप** – शीलरूपगुणविलासादिभिरात्मानुरूपया श्रिया सहासीनं
.........भगवन्तं नारायणं ध्यानयोगेन दृष्ट्वा ।। —ஸ்ரீவைகுண்டகத்யம் 4

**आत्मार्थी** – भक्तियोगस्तदर्थी चेत् समग्रैश्वर्यसाधकः ।
आत्मार्थी चेत् त्रयोऽप्येते तत्कैवल्यस्य साधकाः ।। —கீதார்த்தஸங். 27

**आद्यस्य नः** – माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं
श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ।। —ஆள. ஸ்தோ. 5

आध्यात्मिकाधिभौतिकाधिदैविकदुःखविघ्नगन्धरहितस्त्वं द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्स्व ।। २० शरीरपातसमये तु केवलं मदीययैव दययाऽतिप्रबुद्धो मामेवावलोकयन् अप्रच्युतपूर्वसंस्कारमनोरथो जीर्णमिव वस्त्रं सुखेनेमां प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य तदानीमेव मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्ति-कात्यन्तिकपरभक्ति परज्ञान परमभक्तिकृतपरिपूर्णानवरत नित्यविशदत-मानन्यप्रयोजनानवधिकातिशयप्रियमदनुभवस्त्वं तथाविधमदनुभवजनि-तानवधिकातिशय प्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भविष्यसि २१ मा ते भूदत्र संशयः २२ 'अनृतं ............' 'माशुचः'

इति मयैव ह्युक्तम् २३ अतस्त्वं .........सुखमास्स्व ।।

—சரணாகதிகத்யம் 20 முதல் 24 வரை

आद्यो नारायणो देवस्तस्माद्ब्रह्मा ततो भवः ।
अतः स्वयंभुवश्चान्ये मरीच्याद्यार्कसम्भवाः ।। —வராஹபு. 25-6

**आनुकूल्यस्य** – षोढा हि वेदविदुषो वदन्त्यङ्गं महामुने ।
आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।। —அஹிர்புத்ந்யஸம். 37-27, 28, 29

आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः ।
कार्पण्येनाप्युपायानां विनिवृत्तिरिहोदिता ।। —லக்ஷ்மீதந். 17-76

आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः ।
जानामि त्वां महावीर्यं महोत्साहं महाबलम् ।। —ரா.ஸு. 38-41

**आर्तो जिज्ञा** – चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।। —கீதை 7 - 16

**आपत्स्व** – अथैतेषां वृत्तयः – ब्राह्मणस्य याजनप्रतिग्रहौ, क्षत्त्रियस्य क्षितित्राणम्, कृषिगोरक्षणवाणिज्यकुसीदयोनिपोषणानि वैश्यस्य, शूद्रस्य सर्वशिल्पानि । आपत्स्वनन्तरा वृत्तिः ।। —வைஷ்ணவதர்மசாஸ்த்ரம் 2-5,6

आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ।
तस्मान्नारायणं देवं स्नानकाले सदा स्मरेत् ।।?

आर्तो वा यदि वा दृप्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ।। —ரா.யு. 18-28

**आलस्या** – अनभ्यासेन वेदानामाचारस्य च वर्जानात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ।। —மநுஸ்ம்ருதி 5-4

**इच्छागृही** – समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतवर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितो यः ।। —வி.பு. 6 - 5 - 84

इच्छात एव तव विश्वपदार्थसत्ता नित्यं प्रियास्तव तु केचन ते हि नित्याः।
नित्यं त्वदेकपरतन्त्रनिजस्वरूपा भावत्कमङ्गलगुणा हि निदर्शनं नः ।।

—ஸ்ரீவைகுண்டஸ்தவம் 36

**उत्क्रामति च** – अथवा नेच्छते तत्र ब्रह्मकायनिषेवणम् ।
उत्क्रामति च मार्गस्थो नैव क्वचन जायते ।।
आत्मसिद्धिं समास्थाय शीतीभूतो निरामयः ।
अमृतं विरजाः शुद्धमात्मानं प्रतिपद्यते ।। —பார. சா. 191-27, 28

**उत्तरे चेद्व** – यद्यौवने चरति विभ्रमेण सद्वाऽसद्वा यादृशं वा यदा वा ।
उत्तरे चेद्वयसि साधुवृत्तस्तदेवास्य भवति नेतरा हि ।।

—போதாயன தர்மஸூத்ரம் 1- 10 - 32

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।। —கீதை 7 - 18

उदीर्णसंसारदवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृतिम् ।
प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिन्धुशीकरः ।। —ஆள. ஸ்தோ. 29

**उदुम्बरं** – पिप्पलं च वटं चैव शणशाकं तथैव च ।
उदुम्बरं न खादेत्तु भवार्थी पुरुषो नृप ! ।। —பார. ஆநு. 155 - 97

उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ
स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी ।
उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणा-
वतस्त्वां श्रीरङ्गेशय ! शरणमव्याजमभजम् ।।—ஸ்ரீரங்கராஜஸ்தவம் 2 - 87

**उपायापाय** – कर्मसाङ्ख्यादयः शास्त्रैरुपायत्वेन दर्शिताः ।
हिंसास्तेयादयः शास्त्रैरपायत्वेन दर्शिताः ।।
उपायापायसंत्यागी मध्यमां वृत्तिमास्थितः ।
रक्षिष्यतीति निश्चित्य निक्षिप्तस्वस्वगोचरः ।।
बुद्ध्येत देवदेवेशं गोप्तारं पुरुषोत्तमम् ।। —லக்ஷ்மீதந்த். 17-80, 81

**उपासा** - जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।। —ப்ரஹ்மஸூத்ரம் 1 - 1 - 32

**उपास्योऽयं** - ध्यात्वा मां सर्वयत्नेन ततो जानीत केशवम् ।
उपास्योऽयं सदा विप्रा उपायोऽस्मि हरेः स्मृतौ ।। —ஹரிவம்சம் விஷ்ணுபர். 132 - 14

**उभे सत्या** - त्यज धर्ममधर्मं च त्यज सत्यानृते अपि ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यज ।। —பார. சா. 339-44

ऊहः शब्दो (तर्को)ऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ।। —ஸாங்க்யகாரி. 51

**ऋणं प्रवृ** - गोविन्देति यदाऽऽक्रन्दत् कृष्णा मां दूरवासिनम् ।
ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति ।। —பார. உத். 47-22

एकः शास्ता न द्वितीयोऽस्ति शास्ता यो हृच्छयस्तमहमनुब्रवीमि ।
तेनैव युक्तः प्रवणादिवोदकं यथा नियुक्तोऽस्मि तथा वहामि ।।
—பாரதம் ஆச்வமேதிகம் 27-1

**एते वै निर** - रुद्रादित्यवसूनां च तथाऽन्येषां दिवौकसाम् ।
एते वै निरयास्तात ! स्थानस्य परमात्मनः ।। —பார. சா. 196-6

**एतैस्समे** - विद्याकर्म वयोबन्धुवित्तैर्मान्या यथाक्रमम् ।
एतैः समेतः शूद्रोऽपि वार्धके मानमर्हति ।। —யாஜ்ஞ. ஸ்ம். 1-116

एवं श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः ।
सम्मतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः ।। —ராமா.அ. 1 - 31

एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरिम् ।। —ஹரிவம்சம் விஷ்ணுபர்வ 55 - 59

एष पन्था विदर्भाणामसौ गच्छति कोसलान् ।
अतः परं च देशोऽयं दक्षिणो दक्षिणापथः ।। —பார. ஆர. 50-48

ऐकान्त्यं भगवत्येषां समानमधिकारिणाम् ।
यावत्प्राप्ति परार्थी चेत्तदेवात्यन्तमश्नुते ॥ —கீதார்த்தஸங்க்ர. 28

ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनाम् ।
वेद्योपादेयभावानामष्टमे भेद उच्यते ॥ —கீதார்த்தஸங்க்ர. 12

कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट ! दूरतरेण तानपापान् ॥
—விஷ்ணுபுராணம் 3-7-33

**करीश तेषां** - स्वकैर्गुणैः स्वैश्वरितैः स्ववेदनात् भजन्ति ये त्वां त्वयि भक्तितोऽथवा ।
करीश ! तेषामपि तावकी दया तथात्वकृत्सैव तु मे बलं मतम् ॥
—வரதராஜஸ்தவம் 94

कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः ।
अजन्मनाशस्य सदैकमूर्तेरनामरूपस्य सनातनस्य ॥ —வி.பு. 4 - 1 - 84

**कलौ खलु** - कृतादिषु प्रजा राजन्! कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥

**कलौ संकी** - ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ —வி.பு. 6-2-17

**कः कुप्येत्** - राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया ।
विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ! ॥ —ரா. யு. 116.38

काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः ।
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ —அத்ரிஸ்ம்ருதி

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्याऽऽसनं वाहनं
वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजः सदयितः त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवति ! ब्रूमः कथं त्वां वयम् ॥ —சது:ச்லோகீ 1

**कामये वैष्ण** – न कामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ।। —ஜிதந்தா 1 -13

कालं स पचते तत्र न कालस्तत्र वै प्रभुः ।
सकलस्य प्रभू राजन्! सर्वस्यापि तथेश्वरः ।। —பார.சாந். 196-9

**किं लोके तदि** – माङ्गल्यं परमपदं सदाऽर्थसिद्धिं
निर्विघ्नामधिकफलां श्रियं ददाति ।।
किं लोके तदिह परत्र चास्ति पुंसां
यद्विष्णुप्रवणधियां न दाल्भ्य! साध्यम् ।। —விஷ்ணுதர்மம் 43-46

किं वा सर्वजगत्स्रष्टः! प्रसन्ने त्वयि दुर्लभम् ? ।
त्वत्प्रसादफलं भुङ्क्ते त्रैलोक्यं मघवानपि ।। —வி.பு. 1- 12.79

**कीर्तिः श्री** मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ।। —கீதை 10-34

कृते पापेऽनुतापो वै यस्य पुम्सः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ।। —விபு.2-6-40

**कृपया** – अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे ! कृपया केवलमात्मसात्कुरु ।। —ஆள.ஸ். 48

कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्वते ।
अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चयैः।। —பார.ஸபா.39-5

**कृष्णं धर्मं** – ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते विदन्ति महात्मानं कृष्णं धर्मं सनातनम् । —பார. ஆர. 71-123

**क्रीडतो बाल** – व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च ।
क्रीडतो बालकस्येव चेष्टां तस्य निशामय ।। —வி.பு.1-2-18

**क्रीडा हरे** – अव्यक्तादिविशेषान्तं परिमाणार्थसंयुतम् ।
क्रीडा हरेरिदं सर्वं क्षरमित्यवधार्यताम्।। —பார.சாந்.206-58

**केवलं मदी** – 'आध्यात्मिक' என்ற தலைப்பில் பார்க்க

**क्रियतामिति** – परवानस्मि काकुत्स्थ ! त्वयि वर्षशतं स्थिते ।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ।। —ரா. ஆர. 15-7

**क्लेशानां** – तदेतत् कथितं बीजमविद्याया मया तव ।
क्लेशानां च क्षयकरं योगांदन्यन्न विद्यते ।। —வி.பு. 6-7-25

**क्षरः सर्वाणि** – द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।। —கீதை-15-16

**क्षिपाम्यजस्र** – तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।। —கீதை-16-9

**गर्भभूताः** – न्यस्तदण्डा वयं राजन् ! जितक्रोधा जितेन्द्रियाः ।
रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः ।। —ரா. ஆர. 1-21

**गाढोपगू** – शान्तानन्तमहाविभूति परमं यद्ब्रह्मरूपं हरेः मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् । यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि तान्याहु स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ।। —சது:ச்லோகீ 4

**गुणैर्दास्य** – अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः।
कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः।। —ராமா.கிஷ். 4 -12

**गुणैर्विरु** – तथा सर्वप्रजाकान्तैः प्रतिसञ्जननैः पितुः।
गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः।। —ராமா-அயோ. 1-33

गुणैःषड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुग! युगलैर्हि त्रिभिरभुः । व्यवस्था या चैषा ननु वरद! साऽविष्कृतिवशात् भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः ।। —வரதராஜஸ்தவம் 16

**गुरुर्गरी** पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ?।। —கீதை 11-43

**गुरुरसि–** 'अहमपि' என்ற தொடக்கம் பார்க்க.

गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम् । —லக்ஷ்மீ தந்த்ரம் 17-78

**चतुर्विधा** – 'आर्तो जिज्ञासु' என்ற தொடக்கம் பார்க்க.

**चण्डालमपि** – न जात्या पूजिता राजन् ! गुणाः कल्याणकारणाः ।
चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ।। —பார. ஆச். 116-8

चण्डालाः प्रत्यवसिताःपरिव्राजकतापसाः ।
तेषां जातान्यपत्यानि चण्डालैः सह वासयेत् ।। —தக்ஷஸ்ம்ருதி 4 - 20

**चरणौ शर** – श्रीमन्नारायण ! स्यामिन्ननन्यशरणस्तव ।
चरणौ शरणं यातस्तवैवास्म्यहमच्युत ! ।। —த்வயமந்த்ராந்தரம்

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च । —ப்ரஹ்ம ஸூ. 4-4-17

**जगत्समस्तं** – चकर्थ यस्या भवनं भुजान्तरं तव प्रियं धाम यदीयजन्मभूः।
जगत्समस्तं यदपाङ्गसंश्रयं यदर्थमम्भोधिरमन्थ्यबन्धि च ।। —ஆ. ஸ. 37

जनित्वाऽहं वंशे महति जगति ख्यातयशसां
शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।
निसर्गादेव त्वच्चरणकमलैकान्तमनसामधोधः
पापात्मा शरणद ! निमज्जामि तमसि ।। —ஆளவந்தார் ஸ்தோத்ரம் 61

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ।। —கீதை 7-29

**जह्नुर्नारा** – सुप्रसादः प्रसन्नात्मा विश्वसृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ।। —ஸஹஸ்ரநாமம் 26

**ज्ञानी त्वात्मैव** –'उदाराः' என்ற தலைப்பில் பார்க்க.

**ज्ञानेन हीनः** – आहारनिद्राभयमैथुनानि सामान्यमेतत् पशुभिर्नराणाम् ।
ज्ञानं हि तेषामधिको विशेषो ज्ञानेन हीनः पशुभिः समानः ।। ?

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
प्रकृतीनां हिते युक्तं प्रकृतिप्रियकाम्यया ।। —ராமா.பால. 1-20

**डम्भिहैतुक** - राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धन क्षुधा ।
डम्भिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत् ।। —யாஜ்ஞ. ஸ்ம். 1-130

**तत्तु कर्म** - 'अक्रियावत्' என்ற தலைப்பிற் காண்க

तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः ।
सन्दर्शयन् निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ।।
—ஆள.ஸ்தோத் 4

**तत्प्रकाशित** - तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्या-
त्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ।।—ப்ரஹ்மஸூ. 4 - 2. 16

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ।। —கீதை. 11 - 13

तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत !
स्वयंभुवं महात्मानं देवदेवं सनातनम् ।। —பார. ஆர. 136-23

**तत्सर्वं** - हव्यं कव्यं च सततं विधिपूर्वं प्रयुञ्जते ।
तत्सर्वं देवदेवस्य चरणावुपतिष्ठते ।। —பாரதம் சாந்தி 353-63

**तदन्तर्भावात्** - स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने !
त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसमये ।।
त्वमासीर्मातः ! श्रीः कमितुरिदमित्थंत्वविभवः
तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि ।। —ஸ்ரீகுணர. 28

तदनन्तमसङ्ख्यातप्रमाणं चापि वै यतः ।
हेतुभूतमशेषस्य प्रकृतिः सा परा मुने !।। —வி.பு. 2-7-26

**तदलं क्रूर** -'अभियाचाम' என்ற தலைப்பில் பார்க்க

**तदन्य:** – तस्मात्त्वमपि राजेन्द्र नारायणपरो भव ।
तदन्य: को महोदार: प्रार्थितं दातुमीश्वर: ? ।। —இதிஹாஸஸமு- 31-114

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन: ।। —கீதை 4 - 34

**तद्विसृष्ट:** – यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्ट: स पुरुषो लोके ब्रह्मेति कीर्त्यते ।। —மநுஸ்ம்ருதி 1-11

तम: शूद्रे रज: क्षत्रे ब्राह्मणे सत्त्वमुत्तमम् ।
इत्येवं त्रिषु वर्णेषु विवर्तन्ते गुणास्त्रय: ।। —பார- ஆச்வ. 40-11

तमस: परमो धाता शङ्खचक्रगदाधर: ।
श्रीवत्सवक्षा नित्यश्रीरजय्य: शाश्वतो ध्रुव: ।। —ராமா.யு. 114-15

**तमिमं** – केशवं केशिहन्तारमप्रमेयमरिन्दमम् ।
सर्वलोकेश्वरं कृष्णं विज्ञाय पुरुषोत्तमम् ।।
तमिमं सर्वसम्पन्नमाचार्यं पितरं गुरुम् ।
अर्घ्यमर्चितमर्चाम: सर्वे संमन्तुमर्हथ ।। —பார.ஸபா. 41-2,3

**तमेव शरणं** गच्छ सर्वभावेन भारत ! ।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्यसि शाश्वतम् ।। —கீதை 18-62

**तमेवं** गुणसम्पन्नं रामं सत्यपराक्रमम् ।
लोकपालोपमं नाथमकामयत मेदिनी ।। —ராமா.அ. 2-48

तमेवं गुणसम्पन्नमप्रधृष्यपराक्रमम् ।
लोकपालोपमं नाथमकामयत मेदिनी ।। —ராமா.அ. 1.34

तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि ।। —ஆள.ஸ்தோத்ர. 39

**तव श्रिया** – स्ववैश्वरूप्येण सदाऽनुभूतयाऽप्यपूर्ववद्विस्मयमादधानया ।
गुणेन रूपेण विलासचेष्टितै: सदा तवैवोचितया तव श्रिया ।। —ஆ.ஸ். 38

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ? ।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ।। —ஆ. ஸ். 27

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।। —கீதை 16-24

तस्मात् सप्रणवं शूद्रो मन्नामानि न कीर्तयेत् ।
प्रणवं हि परं लोके ब्रह्म ब्रह्मविदो विदुः ।। —பார- ஆச்வ. 118-14

तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ।
समाश्रितादब्रह्मतरोरनन्तान्निस्संशयो मुक्तिफलप्रपातः ।।
—விஷ்ணுபுராணம் 1-17-91

**तं देवा ब्रा** – असितं सितकर्माणं यथा दान्तं तपस्विनम् ।
चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ।। —பார.சாந். 118 - 11

योऽग्निहोत्ररतो दान्तः सन्तोषनिरतः शुचिः ।
तपस्स्वाध्यायशीलश्च तं देवा ब्राह्मणं विदुः ।।

येन केनचिदाच्छन्नो येन केन चिदाशितः ।
यत्र क्वचन शायी स्यात् तं देवा ब्राह्मणं विदुः ।।

सर्वद्वन्द्वसहो धीरः सर्वसङ्गविवर्जितः ।
सर्वभूतहिते युक्तस्तं देवा ब्राह्मणं विदुः ।।

**योऽहे** रिव गणाद्भीतः सन्मानान्मरणादिव ।
कुणपादिव यः स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ।।

कामक्रोधानृतद्रोहलोभमोहमदादयः ।
न सन्ति यत्र राजेन्द्र तं देवा ब्राह्मणं विदुः ।।
—இதிஹாஸ ஸமுச்சயம் 28-88,89,91,92,95

**तान्येव भा** – तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः ।।
—பாரதம் ஆதி. 1-297

**तामर्चयेत्** – ब्रह्म तस्यां समारोप्य मनसा तन्मयो भवेत् ।
तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् ।।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ।। —விஷ்ணு தர்மம் 103 - 29, 30

तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् ।
यावन्न याति शरणं त्वामशेषाघनाशनम् ।। —வி.பு. 1-9-73

तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशि: ।
पर: पराणां सकला न यत्र क्लेशादय: सन्ति परावरेशे ।।
—விஷ்ணுபுராணம். 6 - 5 - 85

**तेभ्यो विशिष्टां** – सहोपनिषदान् वेदान् ये विप्रा: सम्यगास्थिता: ।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिण: ।
तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ।। —பார. சா. 358-5, 6

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय: ।। —கீதை 7 - 17

**तेषां तु तप** – यानि नि:श्रेयसार्थानि चोदितानि तपांसि वै ।
तेषां तु तपसां न्यासमतिरिक्तं तप: श्रुतम् ।। —அஹிர். ஸம். 37-36

**तैर्युक्त: श्रू** – बहवो दुर्लभाश्चैव ये त्वया परिकीर्तिता: ।
मुने! वक्ष्याम्यहं बुद्ध्वा तैर्युक्त: श्रूयतां नर: ।। —ராமா.பால. 1-7

**त्यक्त्वा पुत्रांश्च** – सोऽहं परुषितस्तेन दासवच्चावमानित: ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गत: ।। —ராமா.யுத். 17 -16

त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ।। —பார- ஆர. ?

**त्जय घर्म** – 'उभे सत्यानृते' என்ற தலைப்பில் பார்க்க.

**त्यज सत्या** – 'उभे सत्यानृते' என்ற தலைப்பில் பார்க்க.

**त्रयाणां क्ष** – अष्टाङ्गयोगयुक्तानां हृद्यागनिरतात्मनाम् ।
योगिनामधिकारः स्यादेकस्मिन् हृदयेशये ।।

व्यामिश्रयागयुक्तानां विप्राणांवेदवादिनाम् ।
समन्त्रे तु चतुर्व्यूहे ह्यधिकारो न चान्यथा ।।

त्रयाणां क्षत्रियादीनां प्रपन्नानां च तत्त्वतः ।
अमन्त्रमधिकारस्तु चतुर्व्यूहक्रियाक्रमे ।।

सक्रिये मन्त्रचक्रे तु वैभवीये विवेकिनाम् ।
ममतासन्निरस्तानां स्वकर्मनिरतात्मनाम् ।।

कर्मवाङ्मनसैः सम्यग्भक्तानां परमेश्वरे ।
चतुर्णामधिकारो वै वृत्ते दीक्षाक्रमे सति ।। —ஸா. ஸ்ம். 2 - 7 to 11

त्रैवर्गिकांस्त्यजेद्धर्मानारम्भानवनीपते ! ।
मित्रादिषु समो मैत्रस्समस्तेष्वेव जन्तुषु ।। ?

**त्वमेव बन्धु** – त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव! ।। —காந்தாரீவாக்யம்

त्वं मेऽहं मे कुतस्तत्तदपि कुत इदं वेदमूलप्रमाणादेतच्चानादिसिद्धादनुभव विभवात्
सोऽपि साक्रोश एव । क्वाक्रोशस्तस्य गीतादिषु मम विदितः कोऽत्र साक्षी
सुधीः स्यात् हन्त त्वत्पक्षपाती स इति नृकलहे मृग्यमध्यस्थवत् त्वम् ।।
—பட்டர் முக்தகம்

**दत्तस्य हर** – आश्रुतस्याप्रदानेन दत्तस्य हरणेन च ।
जन्मप्रभृति यद्दत्तं तत्सर्वं नश्यति ध्रुवम् ।। ?

**दासभूताः** – 'अतोऽहं' என்ற தலைப்பில் பார்க்க.

दासः सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः ।
उपस्थितं तेन पुरो गरुत्मता त्वदङ्घ्रिसम्मर्दकिणाङ्कशोभिना ।।—ஆள.ஸ்தோ. 41

दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ।। —பார.ஆநு. 220 - 31

दृष्ट एव हि नः शोकमपनेष्यति राघवः ।
तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः ।। —ரா.அ. 83 - 9

**दृष्टा सीता** – सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ।। —ரா. பா. 1 - 78

**देवतापार** – पुराणसंहिताकर्ता भवान् वत्स! भविष्यति ।
देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान् ।। —விஷ்ணு.பு. 1-1-26

देवमिवाचार्यमुपासीताविकथयन् अविमना वादं शुश्रूषमाणोऽस्य ।।
—ஆபஸ்தம்பதர்மஸூத்ரம் 1-6-13

**देवस्थान** – प्रत्युत्थानं च वृद्धानां देवस्थानप्रणामनम् ।
आभिमुख्यं पुरस्कृत्य अतिथीनां च पूजनम् ।। ?

देवि ! त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते
यद्यप्येवमथापि नैव युवयोः सर्वज्ञता हीयते ।
यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदु
र्व्योमाम्भोजमिदंतया किल विदन् भ्रान्तोऽयमित्युच्यते ।। —ஸ்ரீஸ்தவம் 8

**देहे चे** – मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत् प्रीतिमान् मूढो भविता नरकेऽपि सः ।। —வி.பு. 1-17-63

दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान् ।
ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु ।। —மநுஸ்ம்ருதி 4 - 153

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ।। —கீதை. 4 - 25

**दैवं चैवा** - अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ।। —கீதை 18 - 14

**द्वयमर्था** - 'आध्यात्मिक' என்ற தலைப்பில் பார்க்க.

द्विविधो भूतसर्गोऽयं दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः ।। —வி. தர்மம் 109-74

**द्वौ च सदै** - लक्ष्म्याः समस्तश्चिदचित्प्रपञ्चः
शेषस्तदीशस्य तु साऽपि सर्वम् ।
तथाऽपि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी ।। ?

**धर्मस्य** - तर्कोऽप्रतिष्ठः श्रुतयो विभिन्नाः नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ।।
—பாரதம் ஆரண்யபர்வம் 268-121

धिगशुचिमविनीतं निर्भ(र्द)यं मामलज्जं परमपुरुष! योऽहं योगिवर्याग्रगण्यैः ।
विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरंतव परिजन-भावं कामये कामवृत्तः ।।
—ஆள.ஸ்தோத்ர. 47

**न कश्चिन्ना** - पापानांवा शुभानां वा वधार्हाणां प्लवङ्गम ! ।
कार्यं करुणमार्येण न कश्चिन्नापराध्यति ।। —ரா. யுத். 116 - 44

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ।। —பார- ஆநு. 232-135

न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ।।
—விஷ்ணுபுராணம் 3-7-20

**न जातु ही** - 'त्वदङ्घ्रिमु' என்ற தலைப்பில் பார்க்க.

न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा ।
योगित्वाच्चेश्वरत्वाच्च सर्वरूपधरो विभुः ।। —வராஹபு. 75 - 44, 45

**न दैवं केश** – सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदाच्छास्त्रं परं नास्ति न दैवं केशवात् परम् ।। —நரஸிம்ஹபு. 18 - 33

**न धर्मनिष्ठो** –'अकिञ्चनोऽनन्य' என்ற தலைப்பில் பார்க்க.

**न त्यजेयं** – 'मित्रभावेन' என்ற தலைப்பில் பார்க்க.

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ।। —கீதை 2 - 12

न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्यं वाऽपि लोकानां कामये न त्वया विना ।। —ரா.அ. 31- 5

**न धर्मनिष्ठो** – 'अकिञ्चनो' என்ற தலைப்பில் பார்க்க.

**न परं पुण्ड** – वासुदेवो महद्भूतं सर्वदैवतदैवतम् ।
न परं पुण्डरीकाक्षाद्दृश्यते पुरुषर्षभ! ।। —பார.பீஷ்ம. 62 - 2

**न भूतसङ्घ** – तदेव कृष्णो दाशार्हः श्रीमान् श्रीवत्सलक्षणः ।
न भूतसङ्घ(सृष्टि)संस्थानो (नं) देहोऽस्य परमात्मनः ।। —பார.சாந்தி. 206 - 60

नमस्कारात्मकं यस्मै विधायात्मनिवेदनम् ।
त्यक्तदुःखोऽखिलान् कामानश्नुते तं नमाम्यहम् ।। —மந்த்ரராஜ பத. 11

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ।। —கீதை 7-15

**नमो नाराय** – ततः प्रभाते विमले विनिवृत्ते च जागरे ।
नमो नारायणेत्युक्त्वा श्वपाकः पुनरागमत् ।। —வராஹபுரா. 135-53

**नरस्य बुद्धि** – उपायापायमुक्तस्य वर्तमानस्य मध्यतः ।
नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते ।। —லக்ஷ்மீதந்த்ர. 28-17

न विगर्ह्य कथां कुर्यात् बहिर्माल्यं न धारयेत् ।
गवां च यानं पृष्ठेन सर्वथैव विगर्हितम् ।। —மநுஸ்ம்ருதி 4 - 72

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वस्ताद्भयमुत्पन्नं समूलमपि कृन्तति ।। —பார. உத். 37 9.

न विष्णवाराधनात् पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ।। —வ்யாஸஸ்ம். 2-42

न विष्णोः परमो देवो विद्यते नृपसत्तम ! ।
विष्णुरेव सदाऽऽराध्यः सर्वदेवैरपि प्रभो ! ।।

न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् ।
स्थितौ स्थितं महाप्राज्ञ! भवत्यन्यस्य कस्यचित् ।। —வி.பு. 1- 22 - 21

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ! ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ।। —கீதை 10 - 40

नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ।। —ப்ரஹ்மஸூத்ரம் 2-3-18

**नानयोर्वि** – देवतिर्यङ्मनुष्येषु पुनामा भगवान् हरिः ।
स्त्रीनाम्नी लक्ष्मीर्मैत्रेय ! नानयोर्विद्यते परम् ।।
स्त्रीनाम्नी श्रीश्च विज्ञेया इति पाठान्तरम् । —வி.பு. 1-8-35

**नाराणामयन** – अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।
नाराणामयनत्वाच्च नारायण इति स्मृतः ।। —பார. உத்-63-32

नारायणमणीयांसमशेषाणामणीयसाम् ।
समस्तानां गरिष्ठं च भूरादीनां गरीयसाम् ।। —வி.பு- 1-9-41

नारायणेति यस्यास्ये वर्तते नाम मङ्गलम् ।
नारायणस्तमन्वास्ते वत्सं गौरिव वत्सला ।।

नारायणेति शब्दोऽस्ति वागस्ति वशवर्तिनी ।
तथाऽपि नरके घोरे पतन्तीत्येतदद्भुतम् ।।

**नासद्भिः** – सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गमम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत् ।।

नाहमाराधयामि त्वां तव बद्धोऽयमञ्जलिः ।
वरार्थिनां त्वं वरद! प्रयच्छाभिमतं वरम् ।। —விஷ்ணுதர்மம் 2-8

**नित्यकिङ्कर** – एवमवस्थितस्यापि अर्थित्वमात्रेण परमकारुणिको भगवान् स्वानुभव-प्रीत्योपनीतैकान्तिकात्यन्तिकनित्यकैङ्कर्यैकरतिरूपनित्य दास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये ।। —ஸ்ரீரங்ககத்யம் 3

**नित्यकिङ्करो** – स्वाधीन ..... .... .... .... .... अहं तदेकानुभवः तदेकप्रियःपरिपूर्णं भगवन्तं विशदतमानुभवेन निरन्तरमनुभूय तदनुभवजनितानवधिकातिशय प्रीतिकारिताशेषवस्थोचिताशेषशेषतैक रतिरूप नित्यकिङ्करो भवानि ।।
—ஸ்ரீரங்ககத்யம் 1

**नित्याभिवा** – कैङ्कर्यनित्यनिरतैर्भवदेकभोगैर्नित्यैरनुक्षणनवीनरसार्द्रभावैः।
नित्याभिवाञ्छितपरस्परनीचभावैर्मद्दैवतैः परिजनैस्तव सङ्गसीय।।
—ஸ்ரீவைகுண்டஸ்தவம் 77

नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ! ।। —விஷ்ணுபு. 1-8-17

निवासवृक्षः साधूनामापन्नानां परा गतिः ।
आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ।। —ராமா.கிஷ். 15 - 19

निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरिते जनैः ।। —ஆள.ஸ்தோ. 40

**निवृत्तिलक्षणं** – व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदम् ।
निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत् ।। —பார.சாந். 219-2

**निवेदयत** – सर्वलोकशरण्याय राघवाय महात्मने ।
निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ।। —ராமா.யுத்த. 17-17

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ।
—ப்ரஹ்மஸூத்ரம் 4-2 -18

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ।। —கீதை 2 - 40

**न्यास: पञ्चा** – निक्षेपापरपर्यायो न्यास: पञ्चाङ्गसंयुत: ।
संन्यासस्त्याग इत्युक्त: शरणागतिरित्यपि ।। —லக்ஷ்மீதந்த்ரம் 17 - 74

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायण: स्वयम् ।
सर्वेषु च नृपश्रेष्ठ! ज्ञानेष्वेतेषु दृश्यते ।। —பார.சாந்தி. 359 - 68

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मन: ।। —கீதை 9 - 26

परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ।
सर्वेषणाविनिर्मुक्त: स भैक्षं भोक्तुमर्हति ।। —பார்ஹஸ்பத்ய ஸ்ம்ருதி

परित्यक्ता मया लङ्का मित्राणि च धनानि च ।
भवद्गतं मे राज्यं च जीवितं च सुखानि च ।। —ராமா.யுத்த. 19-5

परो नारायणो देवस्तस्माज्जातश्चतुर्मुख:।
तस्माद्रुद्रोऽभवद्देवि! स च सर्वज्ञतां गत:।। —வராஹ பு 90 - 3

**परं हि पुण्ड** – एष धाता विधाता च सर्वेषां प्राणिनां प्रभु: ।
परं हि पुण्डरीकाक्षात् न भूतं न भविष्यति ।। —பார.பீ. 67 - 18

**पर: पराणां** – 'तेजोबलैश्वर्य' என்ற தொடக்கம் பார்க்க.

परीक्षां च जगन्नाथ: करोत्यदृढचेतसाम् ।
नराणामर्थविध्वंसनिकषेषु जनार्दन: ।। —விஷ்ணு தர்மம் 74-89

पश्यामि देवांस्तव देव! देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरुगांश्च दीप्तान् ।। —கீதை 11 - 15

पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम ! ।
कार्यं करुणमार्येण न कश्चिन्नापराध्यति ।। —ராமா.யுத்த. 116-44

पापीयसोऽपि शरणागतिशब्दभाजो नोपेक्षणं मम तवोचितमीश्वरस्य ।
त्वद्ज्ञानशक्तिकरुणासु सतीषु नैव पापं पराक्रमितुमर्हति मामकीनम् ।।

—அதிமாநுஷஸ்தவம் 61

**पिता त्वं** – 'तवैवास्मि' என்ற தலைப்பில் பார்க்க.

**पितामहं** – अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ।। —ஆ.ஸ். 65

**पुत्रः प्रेष्य** – त्रिसन्ध्यं कारयेद्बालान् प्रणामं देवपादयोः ।
पुत्रः प्रेष्यस्तथा शिष्य इत्येवं च निवेदयेत् ।। —சாண்டில்யஸ்ம்ருதி 3 - 75

पुंसां जटाभरणमौण्ड्यवतां वृथैव मोघाशिनामखिलशौचनिराकृतानाम् ।
तोयप्रदानपितृपिण्डबहिष्कृतानां संभाषणादपि नरा नरकं प्रयान्ति ।।

— விஷ்ணு புராணம் 3-18-105

**पुलस्त्येन** – ततश्च प्राह भगवान् वसिष्ठो मे पितामहः ।
पुलस्त्येन यदुक्तं ते सर्वमेतद्भविष्यति ।। —விஷ்ணு பு 1 -1 -28

**प्रणमन्ति** – द्रवन्ति दैत्याः प्रणमन्ति देवता नश्यन्ति रक्षांस्यपयान्ति चारयः ।
यत्कीर्तनात् सोऽद्भुतरूपकेसरी ममास्तु माङ्गल्यविवृद्धये हरिः ।।

—விஷ்ணு தர்மம் 43-28

**प्रणिपात** – 'अलमेषा' என்ற தலைப்பில் பார்க்க.

**प्रणिपत्य** – पराशरं मुनिवरं कृतपूर्वाह्णिकक्रियम् ।
मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च ।। —விஷ்ணு புராணம் 1-1-1

**प्रतिबुद्धा** – ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम् ।। —பார. சா. 350. 36

**प्रदीयतां** – पुरा शरत्सूर्यमरीचिसन्निभान् नवान् सुपुङ्खान् सुदृढान्नृपात्मजः।
सृजत्यमोघान् विशिखान्वधायते प्रदीयतां दाशरथाय मैथिली ।।

त्यजस्व कोपं सुखधर्मनाशनं भजस्व धर्मं रतिकीर्तिवर्धनम् ।
प्रसीद जीवेम सपुत्रबान्धवा: प्रदीयतां दाशरथाय मैथिली ।।

—ராமா.யுத்த. 9 - 22 - 23

यावन्न लङ्कां समभिद्रवन्ति वलीमुखा: पर्वतकूटमात्रा: ।
दम्ष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ।।

यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् ।
वज्रोपमा वायुसमानवेगा: प्रदीयतां दाशरथाय मैथिली ।। —ராமா.யுத்த. 14 - 3,4

**प्रपत्तिवाचैव** – यथाऽसि यावानसि योऽसि यद्गुण: करीश! यादृग्विभवो यदिङ्गित: ।
तथाविधं त्वाऽहमभक्तदुर्ग्रहं प्रपत्तिवाचैव निरीक्षितुं वृणे ।। —வரதராஜஸ்தவம் 92

**प्रपत्तिं तां** – आचम्य प्रयतो भूत्वा स्मृत्वाऽस्त्रं ज्वलनाकृति ।
तत्प्रविश्य विनिष्क्रान्त: पूतो भूत्वाऽस्त्रतेजसा ।।
प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गै: पञ्चभिरावृताम् ।। —ல.த. 28-10, 11

**प्रपन्नानां च** – 'त्रयाणां क्ष' என்ற தலைப்பில் பார்க்க.

**प्रवहत्येव हि** – गतमेव गतं जन्म का नु तत्र प्रतिक्रिया ? ।
प्रवहत्येव हि जले सेतु: कार्यो विजानता ।। —வங்கீசகாரிகை 31

प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् ।
प्रवृत्ति: पुनरावृत्तिर्निवृत्ति:परमा गति: ।। —பார.சாந், 219 - 4

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ।। —மநுஸ். 12 - 122

प्रसन्नमभवत्तस्मै प्रसन्नाय चराचरम् ।
पसन्ने देवदेवेशे केशवे भक्तवत्सले ।।

पसन्ने देवदेवेशे सर्वपापक्षयो भवेत् ।
प्रक्षीणपापबन्धास्ते मुक्तिं यान्ति नरा: पुन: ।। ?

**प्रसीद मद्व** – 'पितामहं' என்ற தலைப்பில் பார்க்க.

**प्रहर्षयिष्यामि** – भवन्तमेवानुचरन् निरन्तरं प्रशान्तनिश्शेषमनोरथान्तर: ।
कदाऽहमैकान्तिकनित्यकिङ्कर: प्रहर्षयिष्यामि सनाथजीवित:? ।। —ஆள.ஸ்தோ. 46

**प्राप्यते परमं धाम** – यद्येन कामकामेन न साध्यं साधनान्तरै: ।
मुमुक्षुणा यत् साङ्ख्येन योगेन न च भक्तित: ।।

प्राप्यते परमं धाम यतो नावर्तते यति: ।
तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ! ।।
परमात्मा च तेनैव साध्यते पुरुषोत्तम: ।। —அஹிர்புத் 37-25.26

प्राप्यं ज्ञानं ब्राह्मणात् क्षत्रियाद्वा वैश्याच्छूद्राद्वाऽपि नीचादभीक्ष्णम् ।
श्रद्धातव्यं श्रद्धधानेन नित्यं न श्रद्धिनं जन्ममृत्यू विशेताम् ।।

—பாரதம் சாந்திபர்வம் 323 - 88

प्रारब्धोऽपरिसमाप्तश्च वर्तमान: । —காசிகாவ்ருத்தி 3 - 2 - 123

**प्रायश्चित्तिरियं** – अपायसंप्लवे सद्य: प्रायश्चित्तं समाचरेत् ।
प्रायश्चित्तिरियं साऽत्र यत्पुन: शरणं व्रजेत् ।। —லக்ஷ்மீ தந்.17-91

**बद्धाञ्जलि** – अथ सूर्यसहस्रस्य प्रभां युगपदुत्थिताम् ।
सहसा दृष्टवन्त: स्म पुनरेव बृहस्पते ।।

सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतम् ।
बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिन: ।। —பார. சா. 344-44, 45

**बहवो नृप** – ते तमूचुर्महात्मानं पौरजानपदै: सह ।
बहवो नृप! कल्याणगुणा: पुत्त्रस्य सन्ति ते ।। —ராமா.அ. 2-26

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेव: सर्वमिति स महात्मा सुदुर्लभ: ।। —கீதை- 7 - 19

